धैर्ये यो मेरुणा तुल्यः प्रतापे रविसन्निभः ।
कान्तौ च शशिसंकाशोऽश्नुते भैक्ष्यं तथापि सः ॥ ११ ॥

जो, धैर्य में मेरु के सदृश, प्रताप में सूर्य के सदृश, कान्ति में चन्द्रमा के सदृश हैं, तथापि वे भिक्षा अन्न खाते हैं ॥ ११ ॥

इदानीमपि पुत्रं मां मन्यते जनको मम ।
इति ज्ञात्वा ततो बुद्ध उत्पपात घनोपरि ॥ १२ ॥

'मेरे पिता अभी भी मुझे पुत्र मानते हैं'—ऐसा जानकर बुद्ध वहाँ से मेघ के ऊपर उड़ गये ॥ १२ ॥

पवनोपरि चक्राम पस्पर्श च रवे रथम् ।
जग्राहानेककायान् स पुनरेकं चकार च ॥ १३ ॥

( वे बुद्ध ) वायु के ऊपर घूमने लगे । बुद्ध ने सूर्य का रथ-स्पर्श किया तथा अनेक शरीर ग्रहण किये; फिर एक शरीर बना लिया ॥ १३ ॥

विवेश भुवि निर्बाधं पदातिः सलिलेऽगमत् ।
पर्वतस्योदरेऽधावद् यथाकाशे विहङ्गमः ॥ १४ ॥

( वे बुद्ध ) पृथ्वी में निर्विघ्न प्रवेश कर गये, जल के ऊपर चले, पर्वत के उदर में इस प्रकार दौड़े जैसे आकाश में पक्षी दौड़ता है ॥ १४ ॥

अवर्षयज्जलं भूरि कायार्धेन समेघवत् ।
अर्धाङ्गेन प्रजज्वाल यथाऽकाशे दिवाकरः ॥ १५ ॥

वे बुद्ध आधे शरीर से मेघ के समान प्रभूत जल बरसाये एवं आधे शरीर से ऐसे प्रज्वलित हुए जैसे आकाश में सूर्य ॥ १५ ॥

एवं प्रमोदयन् भूपं दर्शयित्वा स्ववैभवम् ।
अन्यो रविरिवाकाशे तिष्ठन् धर्मं दिदेश सः ॥ १६ ॥

इस प्रकार उन बुद्ध ने अपने योगवैभव ( ऋद्धि-सिद्धि ) दिखाकर राजा ( अपने पिता ) को आनन्दित किया तथा अपर सूर्य की तरह आकाश में स्थित रहकर ( वे ) धर्मोपदेश करने लगे ॥ १६ ॥

राजन् जानामि ते भावं पुत्रवत्सल मा शुचः ।
पुत्रानन्दं परित्यज्य धर्मानन्दः प्रगृह्यताम् ॥ १७ ॥

"हे राजन्! आपका भाव जानता हूँ। हे पुत्रवत्सल! (आप) शोक न करें। पुत्रानन्द का परित्याग कर, धर्मानन्द का अनुभव करें ॥ १७ ॥

कस्मैचित्केनचित्पूर्वं पुत्रेण पितृणाऽथवा।
न दत्तं न गृहीतञ्च निबोधैतन्महामृतम् ॥ १८ ॥

आज से पूर्व किसी पुत्र ने पिता को, तथा पिता ने पुत्र को जो न दिया, न लिया हो, वह बोध रूप महान् अमृत ग्रहण करें ॥ १८ ॥

स्वभावः कारणं भूप विपाकश्चाश्रयस्तथा।
एतच्चतुर्विधं विद्धि रहस्यं कर्मणां नृप ॥ १९ ॥

हे भूप! कर्म का स्वभाव, कर्म का कारण तथा कर्म का विपाक एवं कर्म का आश्रय—ये चार रहस्य हैं। हे नृप! इसे जानें ॥ १९ ॥

कर्मभिश्चाखिलं लोकमाबद्धं विद्धि सुव्रत!।
तस्मात्त्वं कुरु तत्कर्म येन लोके हितं भवेत् ॥ २० ॥

हे सुव्रत! यह सम्पूर्ण विश्व कर्म से आबद्ध है, ऐसा जानें। अतः ऐसा कर्म करें कि जो जगत् में हितकर हो ॥ २० ॥

मृत्युकाले न ते राज्यं न भृत्या न च बान्धवाः।
अशुभं वा शुभं कर्म केवलं त्वाऽनुयास्यति ॥ २१ ॥

मृत्यु काल में न तो यह राज्य, न भृत्यवर्ग, न बन्धुवर्ग, (अपितु) केवल शुभ या अशुभ कर्म ही आपका अनुगमन करेंगे ॥ २१ ॥

मित्रं लोकस्य सत्कर्म शत्रुश्चान्यत् प्रचक्ष्यते।
जगतः कर्मणो ज्ञानं सरहस्यं च चिन्तय ॥ २२ ॥

सत्कर्म, प्राणी का मित्र है। पाप कर्म, शत्रु कहा जाता है। अतः जगत् के कर्म-ज्ञान रहस्यसहित प्राप्त करें ॥ २२ ॥

स्वर्गे वा नरके मर्त्यो भ्राम्यते कर्मभिर्नृप।
त्रिधैव कर्मभेदाः स्युर्जगतः कारणं त्रिधा ॥ २३ ॥

हे नृप! मर्त्य (प्राणी) कर्म से ही स्वर्ग अथवा नरक में घूमते (जन्म लेते) हैं। कर्म के तीन ही (शुभ, अशुभ तथा मिश्रित) भेद हैं तथा ये ही तीन, जगत् के कारण हैं ॥ २३ ॥

सम्यग्रूपेण चात्मानं द्विवर्गे योजयत्वतः ।
मनसो वचसः कृत्यं शोध्यतां शान्तिमाप्नुहि ।। २४ ।।

अतः आप अपने को द्विवर्ग ( धर्म-मोक्ष ) में सम्यग् रूप से लगाइये। मन और वाणी का कृत्य ( कर्म ) शोधिये, एवं शान्ति प्राप्त कीजिये ।। २४ ।।

अब्धिवीचिमिवात्यन्तं ज्ञात्वा विश्वं तु चञ्चलम् ।
कर्मासक्तिमुदासीनश्छेद्यतां धर्म्यकर्मणा ।। २५ ।।

संसार को समुद्र की तरंग के समान अत्यन्त चंचल जानकर, उदासीन रहते हुए, धार्मिक कर्म के द्वारा कर्मासक्ति को काट डालें ।। २५ ।।

ग्रहमण्डलवद्विश्वं शश्वद् भ्रमति सर्वशः ।
काले पतति देवोऽपि मर्त्यलोकस्य का कथा ।। २६ ।।

ग्रहमण्डल की तरह, यह ब्रह्माण्ड निरन्तर तेजी से घूम रहा है। समय पर देवता भी गिर जाते हैं ( फिर ) मनुष्य-प्राणी का क्या कहना ? ।। २६ ।।

आत्मानन्दः परानन्दो निर्वाणं परमं सुखम् ।
ऐश्वर्यस्य सुखं लोके ससर्पगृहवासवत् ।। २७ ।।

आत्मा का आनन्द, परम आनन्द है। निर्वाण, परम सुख है। ऐश्वर्य का सुख तो संसार में, सर्प वाले घर में निवास के सदृश है ।। २७ ।।

इमं लोकं विपद्ग्रस्तं ज्वलदग्निगृहोपमम् ।
अतः पदं जन्मजरामृत्युरिक्तं विमृग्यताम् ।। २८ ।।

यह संसार, अग्नि से जल रहे घर की भाँति, विपत्ति से ग्रस्त है। अतः जन्म–वृद्धत्व आदि से रहित पद की खोज करें ।। २८ ।।

जय त्वं कामरागाणां शत्रूणां महतीं चमूम् ।
जितायां नृप ! तस्यां तु जयशेषो न विद्यते ।। २९ ।।

हे राजन् ! काम-राग आदि की बहुत बड़ी सेना को जीतें। उसके जीत लेने पर ( अन्य कुछ भी ) जीतना शेष नहीं रहता है ।। २९ ।।

दुःखसमुदयो दुःखमुपशमश्च तत्स्मृतिः ।
विज्ञातेषु हि चैतेषु मलं भीतिर्विनश्यतः ।। ३० ।।

दुःख, दुःख का समुदय ( उद्गम ), उपशम, दुःखनाश तथा दुःखनाश

का मार्ग—ये सब जान लेने पर मल ( अज्ञान ), भीति ( भय ) नष्ट हो जाते हैं ॥ ३० ॥"

इति श्रुत्वा वचस्तस्य दृष्टतद्वैभवो नृपः।
सन्तुष्टश्च सहोल्लासैः प्रश्रयावनतोऽब्रवीत् ॥ ३१ ॥

राजा इस प्रकार उनके वचन सुनकर तथा उनका वैभव देखकर सन्तुष्ट एवं प्रफुल्लित हुए तथा प्रेम से नम्र होते हुए बोले—॥ ३१ ॥

घोरदुःखान्महामोहात् कृपयार्य ! विमोचितः।
तात ! ते सफलं जन्म पुत्रवानस्मि चाधुना ॥ ३२ ॥

"हे आर्य ! आपने कृपा करके मुझे, महामोह रूप घोर दुःख से छुड़ा लिया। हे तात ! आपका जन्म सफल है। अब मैं पुत्रवान् हूँ ॥ ३२ ॥

नृपश्रीरुज्झिता स्थाने स्थाने त्यक्ताः प्रिया जनाः।
स्थाने सुदुस्तपस्तप्तं स्थाने मयि दया कृता ॥ ३३ ॥

आपने राज्य-लक्ष्मी का त्याग किया; वह ठीक ही किया है तथा प्रिय जनों का त्याग भी ठीक ही किया है। सुदुष्कर तप भी ठीक ही किया है और मुझ पर उचित कृपा की है ॥ ३३ ॥

पूर्वं राजर्षिवर्य्यैश्च ब्रह्मर्षिभिश्च नार्जितम्।
तज्ज्ञानं भवता लब्धमार्तत्राणाय नैष्ठिकम् ॥ ३४ ॥

पूर्व काल में श्रेष्ठ राजर्षियों ने तथा ब्रह्मर्षियों ने जो प्राप्त नहीं कर सके वह नैष्ठिक ज्ञान आपने दुःखियों की रक्षा के लिये प्राप्त किया है ॥ ३४ ॥

अभविष्यद्भवान्राजा चक्रवर्ती च चेत्ततः।
नादास्यत्सुखमस्मभ्यो दीयते च यथाऽधुना ॥ ३५ ॥

यदि आप चक्रवर्ती राजा भी होते तो भी हम लोगों को उतना सुख नहीं दे सकते थे जितना आज दे रहे हैं ॥ ३५ ॥

अपास्यत्केवलं लोकान् राजा भूत्वा गृहे वसन्।
भवचक्रं मुनिर्भूत्वा च्छित्त्वा तानुद्धरिष्यसि ॥ ३६ ॥

आप राजा होकर, घर में रहते हुए, केवल प्राणियों का पालन ही कर सकते थे किन्तु मुनि होकर तो भवचक्र छेदकर उनका उद्धार कर सकेंगे ॥३६॥

ज्ञानेन सिद्धिभिश्चैव भवचक्रं जितं त्वया ।
विना राज्येन लोकस्य सम्राडिव हि राजसे ।। ३७ ।।

आपने ज्ञान तथा सिद्धि के द्वारा भव चक्र को जीत लिया है ( तथा ) बिना राज्य के सम्पूर्ण लोक के सम्राट् की तरह शोभा पा रहे हैं ।। ३७ ।।"

एवमुक्त्वा भृशं भूपो धीरः सत्यसमाश्रितः ।
पुत्रं ननाम धर्मज्ञो राजा चापि पितापि सन् ।। ३८ ।।

बारम्बार ऐसा कहकर सत्य को जानते हुए धर्मज्ञ राजा ने पुत्र को प्रणाम किया । यद्यपि वे राजा थे तथा पिता भी थे ।। ३८ ।।

योगैश्वर्येण बोधेन युक्तं पित्रा च सत्कृतम् ।
विलोक्य बहवो बुद्धं गृहत्यागे मनो दधुः ।। ३९ ।।

उस समय योग-ऐश्वर्य से सम्पन्न और पिता से सत्कार पाये हुए बुद्ध को देखकर बहुत से लोगों ने घर त्यागने का निश्चय किया ।। ३९ ।।

अनेके राजपुत्राश्च श्रुतधर्मा विरञ्जिताः ।
रुदतो बान्धवान् भोगान् प्रियान् प्रियजनाञ्जहुः ।। ४० ।।

अनेक राजकुमार धर्म सुनकर विरक्त हो गये । रोते हुए बन्धुओं, प्रियजनों एवं प्रिय भोगों को त्याग दिये ।। ४० ।।

कृमिलश्चोपनन्दश्च कुण्डधान्योऽनिरुद्धकः ।
आनन्दश्चापि नन्दश्च श्रुतधर्मा जहुर्गृहम् ।। ४१ ।।

कृमिल, उपनन्द, कुण्डधान्य, अनिरुद्धक, आनन्द और नन्द ने बुद्ध से धर्म सुनकर घर त्याग दिया ।। ४१ ।।

मिथ्योपदेशकस्तेषां देवदत्तस्तथा ययौ ।
उदायिर्गुरुपुत्रश्च मार्गं सोऽनुससार तम् ।। ४२ ।।

उन राजकुमारों को मिथ्या उपदेश करने वाले देवदत्त (उपदेशक ब्राह्मण) ने भी उसी तरह घर त्याग किया तथा उदायि नामक गुरुपुत्र ने भी उसी मार्ग का अनुसरण किया ।। ४२ ।।

दृष्ट्वा तान् प्रस्थितान् सर्वानुपालिश्चाभिनन्दनः ।
सर्वं त्यक्त्वा निमेषेण मतं जग्राह सौगतम् ।। ४३ ।।

अत्रिनन्दन उपालि ने उन सबों को प्रस्थित ( भिक्षुमार्ग पर आरूढ ) देखकर एक क्षण में सब कुछ त्याग कर, सौगत मत ग्रहण कर लिया ॥ ४३ ॥

सुतस्यालोक्य वैराग्यं राजा शुद्धोदनस्ततः ।
राज्यं भ्रातृषु चाधाय राजर्षिवत्समाचरत् ॥ ४४ ॥

तब राजा शुद्धोदन अपने पुत्र का वैराग्य देखकर भाइयों को राज्यभार सौंपकर राजर्षि जैसा रहने लगे ॥ ४४ ॥

दीक्षितैस्तैश्च पौरैश्च साकं बुद्धः पुरं ययौ ।
अश्रुक्लिन्नाननाः पौरा मुहुः पुष्पाण्यवाकिरन् ॥ ४५ ॥

उन दीक्षितों तथा पुरवासियों के साथ बुद्ध, नगर में गये । अश्रु बहाते हुए पुरवासियों ने बारम्बार पुष्पवर्षा की ॥ ४५ ॥

श्रुत्वा राजकुमारस्य नगरागमनं तदा ।
सहसान्तःपुरादेत्य नार्यो वातायने स्थिताः ॥ ४६ ॥

तब राजकुमार का नगर में आगमन सुनकर स्त्रियाँ अन्तःपुर से सहसा खिड़कियों पर आकर देखने लगीं ॥ ४६ ॥

मुनिवस्त्रावृतस्यापि सन्ध्याभ्रलीनभानुवत् ।
कान्तिमत्तस्य वदनं विलोक्याश्रूणि तत्यजुः ॥ ४७ ॥

मुनि-वस्त्र ( वल्कल ) धारण किये होने पर भी, सन्ध्याकालीन मेघ में छिपे सूर्य की कान्ति के सदृश, देदीप्यमान उनका मुखमण्डल देखकर स्त्रियों ने रो दिया ॥ ४७ ॥

अधोदृष्टिं प्रशान्तञ्च तपसा दीप्तदीधितिम् ।
तमालोक्याकुला नार्यो दीनाः प्रोचुः परस्परम् ॥ ४८ ॥

नीचे की ओर मुख किये शान्तचित्त, तप के तेज से प्रकाशित बुद्ध को देखकर दीन और विह्वल होती हुई स्त्रियाँ परस्पर यों बोलने लगीं ॥ ४८ ॥

कन्थायाः परिधानेन शिरसा मुण्डितेन च ।
तिरोहितेऽपि सौन्दर्ये तेजसा तु महानसौ ॥ ४९ ॥

"कन्था धारण करने से तथा सिर मुड़ाने से यद्यपि इनका सौन्दर्य ढक गया है फिर भी (वे ) तेज से महान् प्रतीत हो रहे हैं ॥ ४९ ॥

छत्रचामरयुक्तैश्च सायुधैः सैनिकैः सह ।
गमनार्होऽप्यसौ मह्यां दधद्याति कमण्डलुम् ॥ ५० ॥

शस्त्रधारी सैनिकों के बीच छत्र-चँवर से सज्जित होकर चलने योग्य, ये आर्य, कमण्डलु लिये पृथ्वी पर पैदल चल रहे हैं ॥ ५० ॥

वाहनं च भवेद्यस्य गजवाजिरथादिकम् ।
भिक्षापात्रं वहन् सोऽद्य भिक्षामटति नित्यशः ॥ ५१ ॥

जिनके पास हाथी-घोड़ा-रथ आदि वाहन होते, वे आज भिक्षापात्र लेकर सदा भिक्षा मांगते-फिरते हैं ॥ ५१ ॥

सस्पृहं तरुणीभिर्यो वस्त्रालंकारभूषितः ।
गच्छेन्निरीक्ष्यमाणः स याति दृष्टिमधो दधत् ॥ ५२ ॥

जो वस्त्र तथा अलंकार से अलंकृत होकर मार्ग में जब चलते थे तब तरुणियाँ स्नेह-पूर्वक देखती थीं, वे नीचे शिर किये जा रहे हैं ॥ ५२ ॥

अन्वेषयति किं तत्त्वं यतो वेषमिमं दधौ ।
पुत्रदारसुखं हित्वा व्रतेन मोदते कथम् ॥ ५३ ॥

कौन सा तत्त्व खोजते हैं ये, जो कि ऐसा वेष धारण किये हैं ? तथा स्त्री-पुत्र आदि का सुख छोड़कर इस व्रत से प्रसन्न हैं ॥ ५३ ॥

कियच्छोकाकुला नूनं राजपुत्री यशोधरा ।
तथापि खलु सा धीरा ह्यधुना ध्रियते यतः ॥ ५४ ॥

राजपुत्री यशोधरा निश्चय ही शोक से कितना व्याकुल होगी ? तथापि निश्चय ही वह बड़ी धीर है जो कि अभी भी जी रही है ॥ ५४ ॥

पूर्णचन्द्राननस्यास्य प्रियपुत्रस्य तापसम् ।
वेषं विलोक्य किं राजा मोदमापाथवा शुचम् ॥ ५५ ॥

पूर्ण चन्द्रका के सदृश मुख वाले अपने प्रिय पुत्र का तापसवेष देखकर, राजा क्या प्रसन्न हुए होंगे अथवा दुःखी हुए होंगे ॥ ५५ ॥

अश्रुक्लिन्नमुखं वीक्ष्य राहुलं स्वसुतं यदि ।
नानुरज्येदसौ तर्हि व्रतमस्यास्ति दुष्करम् ॥ ५६ ॥

अश्रु से व्याप्त अपने प्रिय पुत्र राहुल का मुख देखकर यदि इन्हें मोह नहीं हुआ, तब तो इनका व्रत बड़ा कठिन है ॥ ५६ ॥

महाव्रतकृशस्यास्य लावण्यं त्वक्षतं ध्रुवम् ।
नूनं जितात्मनाऽनेन शान्तिर्लेभे सुनिश्चला ॥ ५७ ॥

इस महाव्रत से इनका शरीर क्षीण हो गया है, किन्तु सौन्दर्य निश्चित ज्यों का त्यों है । अवश्य ही इन जितेन्द्रिय ने अत्यन्त निश्चल शान्ति प्राप्त की है ॥ ५७ ॥

विलपन्तीषु नारीषु तासु चैवं त्वसौ पुनः ।
लब्धभिक्षस्त्वनासक्तो न्यग्रोधवनमाययौ ॥ ५८ ॥

इस तरह स्त्रियाँ विलाप करती हुई, इन्हें देख रही थीं, किन्तु अनासक्त ( बिना प्रभावित हुए ) बुद्ध, भिक्षा लेकर न्यग्रोध वन को चले गये ॥ ५८ ॥

ये लोकाः किल पुण्यकर्मरहिता दानेऽक्षमा भिक्षवे
ये चापि श्रमणा मनोजयविधौ शक्ता न तुष्टा न च ।
ते मोक्षं कथमाप्नुयुश्च जगतः श्रेयः कथं संभवे-
दित्थं वै मनसा स्मरन् स नगरं गत्वा पुनश्चागतः ॥ ५९ ॥

इति श्रीरामचन्द्रदासकृते उत्तरबुद्धचरितमहाकाव्ये
पितृपुत्रसमागमो नाम एकोनविंशः सर्गः

जो संसारी लोग पुण्य कर्म से रहित हैं, भिक्षुओं को भिक्षा देने में असमथ हैं, और जो श्रमण ( संन्यासी ) अभी तक मन को जीतने में समर्थ नहीं हुए हैं तथा शान्ति प्राप्त नहीं कर सके हैं; उन्हें मोक्ष कैसे प्राप्त होगा ? तथा संसार का हित कैसे होगा ? इन सब बातों को मन में सोचते हुए, नगर में जाकर भी पुनः लौट आये ( अर्थात् मैं घर में रह जाऊँगा तो उपर्युक्त काम पूरा नहीं होगा ) ॥ ५९ ॥

यह श्री रामचन्द्रदास कृत उत्तरबुद्धचरित महाकाव्य में
"पितापुत्र समागम" नामक उन्नीसवाँ सर्ग समाप्त हुआ

---

# अथ विंशतितमः सर्गः

## जेतवनस्वीकृतिः

### जेतवन-स्वीकृति

ततः कपिलवस्तौ वै कालं कञ्चिदुवास सः।
दयां कुर्वञ्जनौघे हि जगदात्मा जनप्रियः ॥ १ ॥

तब वे जगत् के आत्मा, लोकप्रिय तथागत जनसमूह पर दया करते हुए कपिलवस्तु में कुछ काल तक निवास किये ॥ १ ॥

संप्रतस्थे पुरं रम्यं प्रसेनजित्प्रपालितम्।
तमो भिन्दञ्जनान्तःस्थं तेजसा भास्करो यथा ॥ २ ॥

फिर अपने तेज से लोगों के अन्दर अज्ञान-अन्धकार को दूर करते हुए, प्रसेनजित् से परिपालित रम्य नगर को वैसे ही प्रस्थान किये जैसे सूर्य, किरणों से अन्धकार को दूर करते चलते हैं ॥ २ ॥

कैलासधवलैः सौधैः प्रफुल्लाशोकपङ्क्तिभिः।
रम्यं जेतवनं प्राप ततः कूजितकोकिलम् ॥ ३ ॥

वहाँ से चलकर कैलाश के समान सफेद अट्टालिकाओं से और फूले हुए अशोक वृक्षों की पंक्तियों से रम्य, जहाँ कोयल कुहुक रहे थे उस जेतवन को पहुँचे ॥ ३ ॥

स्वर्णमाली सुदत्तो वै कलशस्थजलैः शिवैः।
पुष्पादिभिश्च संपूज्य तस्मै जेतवनं ददौ ॥ ४ ॥

स्वर्ण की माला धारण किये राजा सुदत्त, कलश में पवित्र जल लेकर पुष्प आदि द्रव्य से पूजा करके तथागत को जेतवन दे दिया ॥ ४ ॥

तदा शाक्यमुनिं द्रष्टुं तं भूपालः प्रसेनजित्।
जेतारण्यमुपागम्य प्रणम्य श्रद्धयाऽवदत् ॥ ५ ॥

उस समय शाक्यमुनि ( बुद्ध ) का दर्शन करने के लिये राजा प्रसेनजित् जेतवन में आकर श्रद्धापूर्वक प्रणाम करके बोला ॥ ५ ॥

सौभाग्यं कौशलेयानां यन्मुनेऽत्र निवत्स्यसि ।
हतभागास्तु ते देशा वञ्चितास्त्वद्विधेन ये ॥ ६ ॥

"हे मुने ! कोशलवासियों का बड़ा सौभाग्य है क्योंकि आप यहाँ निवास करेंगे । वे देश अभागे हैं जो आप जैसों से वंचित हो गये हैं ॥ ६ ॥

दर्शनात्तव सर्वज्ञ ! कृतार्थोऽस्मि च सप्रजः ।
महतां दर्शनं पुण्यं केषाञ्चिदुपजायते ॥ ७ ॥

हे सर्वज्ञ ! आपके दर्शन से मैं प्रजासहित कृतार्थ हो गया । महापुरुषों का पुनीत दर्शन किन्हीं ( भाग्यवानों ) को होता है ॥ ७ ॥

वातोऽपि सुमनःसङ्गाद् गन्धवान् भवति क्षणात् ।
मेरुसंगात्स्वर्णरूपाः संभवन्ति पतत्रिणः ॥ ८ ॥

वायु भी पुष्प के संग से तत्काल सुगन्धित हो जाती है । सुमेरु ( पर्वत ) के संग से पक्षी सोने के हो जाते हैं ॥ ८ ॥

पूतं चैतद्वनं वासात् त्रैलोक्याधिपतेस्तव ।
गाधिपुत्रनिवासेन त्रिशङ्कोर्भवनं यथा ॥ ९ ॥

तीनों लोकों के अधिपति आपके निवास से यह वन पवित्र हो गया, जैसे गाधिपुत्र ( विश्वामित्र ) के निवास से त्रिशंकु का भवन पवित्र हुआ था ॥ ९ ॥

लोकेऽस्मिन् विविधा लाभा नाशशीला महामुने ।
केवलं तव सान्निध्यमविनाशि प्रतीयते ॥ १० ॥

हे महामुने ! इस संसार में विविध लाभ ( धन-पुत्रादि ) सब नाशवान हैं, केवल आपका सांनिध्य ( सत्संग ) अविनाशी प्रतीत होता है ॥ १० ॥

दर्शनं ते दयासिन्धो ! शश्वदस्त्वधमस्य मे ।
रागाच्च राजधर्माच्च साधो ! संपीडितोऽस्म्यहम ॥ ११ ॥

हे दयासिन्धो ! मुझ अधम को निरन्तर आपका दर्शन होता रहे । हे साधो ! मैं राग से और राजधर्म से अत्यन्त पीड़ित हूँ ॥ ११ ॥

इन्द्रतुल्यस्य भूपस्य चैतच्छ्रुत्वा वचो मुनिः ।
कामलोभान्वितं मत्वा तमाह प्रेरयन्निव ॥ १२ ॥

इन्द्र के समान राजा ( प्रसेनजित् ) का यह वचन सुनकर उसे कामना एवं लोभ से युक्त समझकर, प्रेरणा देने की तरह ( वे बुद्ध ) बोले ॥ १२ ॥

सम्यग् व्यवस्थिता बुद्धिस्तव राजर्षिसत्तम ।
साधुषु समचित्तेषु यत्ते श्रद्धा बभूव ह ॥ १३ ॥

हे राजर्षियों में श्रेष्ठ ! तुम्हारी बुद्धि अच्छी तरह व्यवस्थित हो गई है जो कि समचित्त ( समदर्शी ) साधुओं में ऐसी श्रद्धा उत्पन्न हुई है ॥ १३ ॥

सङ्गं वाञ्छन्ति साधूनामार्याणां ये नरोत्तमाः ।
नूनमूर्ध्वमधः स्थानात्क्षिप्रं जिगमिषन्ति ते ॥ १४ ॥

जो नरश्रेष्ठ आर्य साधुओं का संग चाहते हैं वे सच में निम्न ( नीचे ) स्थान से शीघ्र ऊपर जाना चाहते हैं ॥ १४ ॥

किञ्चित्तुभ्यं हितं वच्मि यतस्ते चञ्चलं मनः ।
तच्छ्रुत्वाऽचर राजेन्द्र ! ह्यादेशः सफलो भवेत् ॥ १५ ॥

क्योंकि तुम्हारा मन चंचल है, अतः मैं कुछ तुम्हारे हित की बात कहूँगा । उसे सुनकर, हे राजेन्द्र ! आचरण में लाओ जिससे मेरा उपदेश सफल होवे ॥ १५ ॥

यदा कालो गृहीत्वा त्वां दृढं कर्दयति निष्ठुरः ।
न केऽप्यनुगमिष्यन्ति कर्म यास्यति केवलम् ॥ १६ ॥

जब निष्ठुर काल तुम्हें दृढ़ता से पकड़कर खींचेगा तब तुम्हारे साथ कोई नहीं जायगा; केवल तुम्हारा कर्म ही जायगा ॥ १६ ॥

चेत्काङ्क्षसि यशः शुभ्रं प्रजाः पालय धर्मतः ।
मोहाद्धर्मपरित्यागात्स्वर्गे स्थानं न विद्यते ॥ १७ ॥

यदि तुम उज्ज्वल यश चाहते हो तो धर्मपूर्वक प्रजा का पालन

करो। मोह के कारण धर्मत्याग करने से स्वर्ग में स्थान नहीं मिलता है ॥ १७ ॥

स्वर्गं लेभे कृशाश्वः स भुवं धर्मेण पालयन्।
धर्मच्युतो निकुम्भश्च काश्यां भुवि विवेश ह ॥ १८ ॥

उस कृशाश्व ने धर्मपूर्वक पृथ्वी का पालन करने के कारण स्वर्ग प्राप्त किया और धर्म से पतित निकुंभ, काशी में पृथ्वी में समा गया ॥ १८ ॥

अशुभं च शुभं कर्म सौम्य! तुभ्यमुदाहृतम्।
धर्मेण पालयँल्लोकान् यशसे यत्नवान् भव ॥ १९ ॥

हे सौम्य! मैंने शुभ-अशुभ कर्म का उदाहरण दिया। धर्म से संसार का पालन करते हुए यश के लिये प्रयत्नशील होओ ॥ १९ ॥

नोत्पीडय जनान् भद्र! नेन्द्रियाणि स्वतन्त्रय।
मा कुरु पापिनां सङ्गं मा देहि कुपथे मनः ॥ २० ॥

हे भद्र! लोगों को उत्पीडित न करो। इन्द्रियों को स्वतंत्र न छोड़ो। पापियों का साथ न करो। कुमार्ग में मन न लगाओ ॥ २० ॥

माऽवमानय धर्मज्ञान् मा संपीडय तापसान्।
पापे मनो दधज्जातु व्रतं पूतं च मा चर ॥ २१ ॥

धर्मज्ञों का अपमान न करो। तपस्वियों को पीड़ा न पहुँचाओ तथा पाप में मन लगाये हुय पवित्र व्रत मत करो ॥ २१ ॥

भव मा चाशुभालम्बी कुकर्माचरणं त्यज।
मदालसश्च मा भूयाः प्रसन्नमनसा शृणु ॥ २२ ॥

और अशुभ वासना का अवलम्ब (सहारा) न लो। कुत्सित कर्म का आचरण मत करो। मद से आलसी न बनो। प्रसन्न मन से सुनो (सत्संग करो) ॥ २२ ॥

मा नाशय यशः शुभ्रं माऽसत्यं यातु ते मनः।
यथाशास्त्रं वलिं भूमेस्तात! चादातुमर्हसि ॥ २३ ॥

उज्ज्वल यश का नाश न करो। तुम्हारा मन कभी भी असत्य को स्वीकार

न करे। हे तात ! शास्त्र में वर्णित ( छठा अंश ) पृथ्वी का कर लेना ही तुम्हें उचित है ॥ २३ ॥

मन आधाय सद्धर्मे साधुसङ्गं समाचर।
जन्मन्यस्मिँस्तथा साध्यं यथा स्यात्परमं पदम् ॥ २४ ॥

सद्धर्म ( बुद्धधर्म ) में मन लगाकर साधुओं का सत्संग करो। इस जन्म में ऐसा साधन करना चाहिये जिससे परम पद मिल सके ॥ २४ ॥

वीर्यं रक्षँस्तथा विद्यामर्जन् धैर्यं च धारयन्।
स्मरन् मृत्युं जितक्लेशः सन्मार्गमवलम्बय ॥ २५ ॥

वीर्य ( ब्रह्मचर्य ) की रक्षा करते हुए तथा विद्या (ज्ञान) का उपार्जन करते हुए एवं धैर्य धारण करते हुए, मृत्यु का स्मरण करते हुए क्लेश ( अविद्या आदि ) को जीतकर सन्मार्ग का आश्रय लो ॥ २५ ॥

दृष्टपूर्वफलं बीजं धीमान् वपति नान्यथा।
तथा त्वं कुरु तत्कर्म यस्य दृष्टं फलं पुरा ॥ २६ ॥

बुद्धिमान लोग, जिसका फल पहिले देख लिया गया हो, वैसा बीज बोते हैं; अन्यथा नहीं बोते। इसी तरह तुम भी ऐसा कर्म करो जिसका फल महात्माओं ने पहले देखा है ॥ २६ ॥

लोके तूच्चपदस्थोऽपि नरः पापरतो यदि।
प्रकाशस्थस्य चैतस्य चित्तं तमसि वर्तते ॥ २७ ॥

संसार में जो ऊँचे पद पर रहते हुए भी पाप में रत (लगा हुआ) रहता है, वह प्रकाश में रहता हुआ भी, उसका चित्त अन्धकार में है ॥ २७ ॥

यश्च धर्मरतो धीरश्चापि ख्याति-विवर्जितः।
अन्धकारे स्थितेऽप्यस्य चित्तं ज्योतिषि वर्तते ॥ २ ॥

जो धीर पुरुष धर्मपरायण रहता है, चाहे उसकी ख्याति न हो, वह चाहे अन्धकार में बैठा हो, उसका चित्त ज्योति में है ॥ २८ ॥

कुलीनस्य पदस्थस्य मनो धर्माद्विशुद्ध्यति।
अकुलीनस्य नीचस्य पापात्तमसि लीयते ॥ २९ ॥

उच्च कुल के और उच्च पद के प्राणी का मन धर्म से विशुद्ध होता है।

नीच कुल के और नीच प्राणी का मन पाप के कारण अन्धकार ( अज्ञान ) में लीन होता है ॥ २६ ॥

भोगलिप्सोः प्रवृत्तिस्तु निम्ना भवति नोत्तमा ।
एवं व्यवस्थिते राजन्! यथेच्छसि तथा कुरु ॥ ३० ॥

भोगलोलुप मनुष्य की प्रवृत्ति निम्नगामी होती है, उन्नतिशील नहीं हो सकती । हे राजन्! ऐसी अवस्था में तुम जैसा चाहो वैसा करो ॥ ३० ॥

न कोऽपि कुशलं कर्म परार्थं कर्त्तुमर्हति ।
कृतेऽपि न फलं तस्य परस्मै भवति क्वचित् ॥ ३१ ॥

कोई भी प्राणी परमार्थ के लिये कुशल ( पुण्य ) कर्म करने योग्य नहीं है । यदि करे भी तो उसका फल दूसरे के लिये नहीं हो सकता ॥ ३१ ॥

यः कर्त्ता स हि भोक्ता स्यात्कर्मणस्तु फलं ध्रुवम् ।
नाकृतस्य फलं जातु कर्मणो निश्चितं भवेत् ॥ ३२ ॥

जो कर्ता है; वही भोक्ता है । कर्म का फल निश्चित होता है । जो कर्म नहीं किया गया हो उसका कभी भी कोई निश्चित फल नहीं होता है ॥ ३२ ॥

इहामुत्र फलं नास्ति कृतेन कर्मणा विना ।
न च जन्मविनाशः स्यात्तस्मात्सत्कर्मवान् भव ॥ ३३ ॥

कर्म किये बिना इस लोक में अथवा परलोक में कोई फल ( भोग ) नहीं मिलता है और जन्म-मृत्यु का विनाश भी नहीं होता है । अतः तुम सत्कर्म करने वाले बनो ॥ ३३ ॥

जीवलोके सुखं नास्ति तस्य पापरतस्य वै ।
स्वयंकृतस्य पापस्य फलं भोक्ष्यति चात्महा ॥ ३४ ॥

उस पापपरायण मनुष्य को इस जीवलोक में सुख नहीं मिलता है और वह आत्मघाती, परलोक में भी अपने किये हुए पाप का फल भोगेगा ॥ ३४ ॥

जन्ममृत्युजराव्याधिभिश्चतुर्भिर्नगोत्तमैः ।
दुःखैः समावृता मूढा भ्रमन्ति विवशाः सदा ॥ ३५ ॥

जन्म, मृत्यु, जरा ( वृद्धावस्था ), तथा व्याधि—ये चारों पर्वत के समान

दु:ख हैं। इनसे घिरे हुए मनुष्य मूढ ( मार्गभ्रष्ट ) पराधीन होकर संसार में सदैव भटकते रहते हैं ॥ ३५ ॥

निपतन्ति यदा दु:खान्येतानि विवशे नरे।
नाप्यते प्रतिरोधश्चेद्धर्मो हि शरणं तदा ॥ ३६ ॥

जब ये दु:ख परवश मनुष्य में आ पड़ते हैं, उस समय उनका विरोध ( दु:खनाश का उपाय ) नहीं सूझता है; तब धर्म ही एक मात्र शरण ( रक्षक ) होता है ॥ ३६ ॥

विद्युच्चचलमनायुष्यं सुखं क्षणिकमैन्द्रियम्।
जगन्मृत्युकराग्रस्थं धर्म एव हि निश्चल: ॥ ३७ ॥

आयु, विद्युत् की भाँति, थोड़ी देर चमकने वाली है। इन्द्रियजन्य सुख क्षणिक है। जगत् मृत्यु की मुट्ठी में स्थित है। केवल धर्म ही अचल है ॥ ३७ ॥

इन्द्रकल्पा नृपा युद्धे ये जिग्युर्विबुधानपि।
शक्तिमन्तोऽपि ते तात! बभुवुर्दु:खभागिन: ॥ ३८ ॥

हे तात! इन्द्र के समान राजा लोग, जिन्होंने युद्ध में देवताओं को भी जीता है वे भी, अन्त में दु:खभागी हुए हैं ॥ ३८ ॥

धरणी लीयते मेरुर्दह्यते प्रलयाग्निना।
काले शुष्यति सिन्धुश्च मर्त्यलोकस्य का कथा ॥ ३९ ॥

काल पाकर, पृथ्वी विलीन हो जाती है, प्रलय की अग्नि से सुमेरु जल जाता है, समुद्र भी सूख जाता है ( तो ) मनुष्य प्राणी की क्या गिनती है? ॥ ३९ ॥

वायुस्तिष्ठति संभ्रम्य रवि: संतप्य यात्यध:।
संशाम्यति ज्वलित्वाग्नि: सर्वं संपरिवर्ति हि ॥ ४० ॥

वायु चलकर रुक जाती है। सूर्य तपकर नीचे गिर जाता है। अग्नि जलकर बुझ जाती है। संसार में सब कुछ परिवर्तनशील है ॥ ४० ॥

पालयत्यनिशं देहं सावधानतया नर:।
लालयत्युपभोगैश्च न तथापि स जीवति ॥ ४१ ॥

मनुष्य बड़ी सावधानी से शरीर को निरन्तर पालता है, अनेक उपभोगों से लालन ( प्यार ) करता है, तो भी नहीं जीता है ॥ ४१ ॥

इत्थं लोकस्थितौ लोका मानमोहमदान्विताः ।
शेरते सुखपर्य्यङ्के त्वं न स्वपिहि भूपते ! ॥ ४२ ॥

संसार की ऐसी स्थिति है । मनुष्य मान, मोह, मद से चूर होकर सुख से पलंग पर सोता है । हे भूपते ! तुम ऐसा न सोओ ॥ ४२ ॥

चलायां भवदोलायामारूढा मूढमानवाः ।
विश्रब्धा न तु पश्यन्ति चासन्नं मरणं ध्रुवम् ॥ ४३ ॥

चंचल संसाररूपी झूला पर चढ़े हुए मूढ मनुष्य संसार पर विश्वास कर रहे हैं; किन्तु निश्चित एवं समीप में आई हुई मृत्यु को नहीं देख पाते हैं ॥ ४३ ॥

परिणामेऽप्रियं यच्च तन्न सेव्यं त्वयाऽनघ ! ।
तत्कार्यञ्च न कर्त्तव्यं फलं यस्य तु कुत्सितम् ॥ ४४ ॥

हे निष्पाप ! जो परिणाम में अप्रिय ( दुःखद ) हो, उसका सेवन तुम्हें नहीं करना चाहिए तथा वह कार्य नहीं करना चाहिए जिसका फल कुत्सित ( रोग-शोक देने वाला ) हो ॥ ४४ ॥

न स मित्रं न यस्मिन्स्युर्मित्रोक्ताः शोभना गुणाः ।
न च तदुत्तमं ज्ञानं यत्र दुःखं व्यपोहति ॥ ४५ ॥

वह मित्र नहीं, जिसमें मित्र के बताये गये सुन्दर गुण न हों; इसी प्रकार वह उत्तम ज्ञान नहीं, जो दुःख को न मिटा सके ॥ ४५ ॥

ज्ञानं चेत्त्वयि राजेन्द्र ! पुनर्जन्म न ते ध्रुवम् ।
कथं चित्संभवेद्वत्स ! तद्रूपं भविष्यति ॥ ४६ ॥

हे राजेन्द्र ! यदि तुम में ज्ञान है तो निश्चय है कि फिर से तुम्हारा जन्म नहीं होगा । और हे वत्स ! यदि किसी तरह ( जन्म ) हुआ भी तो वह रूप-रहित होगा ॥ ४६ ॥

अनित्यमशुभागारं पौनःपुन्यं कलेवरम् ।
चेदधासि न मुक्तस्त्वं विषयेभ्यो भविष्यसि ॥ ४७ ॥

अनित्य, अमंगल का घर, यह शरीर, यदि तुम बारम्बार धारण करते रहो तो जानो कि विषयों से मुक्त नहीं हो सकते हो ॥ ४७ ॥

कर्माधीना अरूपा हि देवा अपि न शाश्वताः ।
निवृत्त्यां मन आधत्स्व प्रवृत्त्यां शं न विद्यते ॥ ४८ ॥

रूप-रहित देवता भी कर्म के अधीन हैं तथा अनित्य हैं। तुम निवृत्ति में मन लगाओ। प्रवृत्ति में शान्ति नहीं है ॥ ४८ ॥

गतिस्थितिक्रियाधारं शरीरं दुःखहेतुकम् ।
निर्वाणज्ञानतः क्षिप्रमृणं नश्यति दैहिकम् ॥ ४९ ॥

गति, स्थिति और क्रिया का आधार, शरीर दुःख का कारण है। निर्वाण का ज्ञान हो जाने से शीघ्र ही शारीरिक ऋण का नाश हो जाता है ॥ ४९ ॥

वासना जन्मनो बीजं दुःखं जन्मैव देहिनाम् ।
अतो वासनया मुक्तः सर्वदुःखाद्विमुच्यते ॥ ५० ॥

वासना ही जन्म का मूल कारण है और प्राणियों का जन्म लेना ही दुःख है; अतः वासना से मुक्त हुआ ( व्यक्ति ) सब दुःखों से मुक्त हो जाता है ॥ ५० ॥

अरूपेषु सरूपेषु देवेष्वपि हि वासना ।
विधत्तेऽतो पुनर्जन्मप्रवृत्तिर्न निवर्तते ॥ ५१ ॥

साकारों में, निराकारों में और यहाँ तक कि देवताओं में भी वासना होती है। इससे प्रवृत्ति का निवारण नहीं होता और इसीलिये बार बार जन्म होता है ॥ ५१ ॥

षण्णां कामादिभावानां क्षेत्रेषु विचरन्ति ये ।
तेषां कथं पुनर्जन्म प्रवृत्तिर्निर्गमिष्यति ॥ ५२ ॥

जो लोग छः प्रकार की कामवासनाओं के क्षेत्र में विचरण करते हैं; कैसे उन लोगों का पुनर्जन्म या प्रवृत्ति रुक सकती है ? ॥ ५२ ॥

इदमेव परं ज्ञेयमिदमेव परा मतिः ।
इदमेव परं ज्ञानमितो नान्यत्तु किञ्चन ॥ ५३ ॥

यही परम ज्ञेय है; अन्य नहीं। यही परम बुद्धि है; अन्य नहीं यही परम ज्ञान है; अन्य नहीं। इसे ही जानना चाहिये ॥ ५३ ॥

नैष धर्मो गृहस्थानामिति नैव वितर्कयेत्।
गृहस्थो वा वनस्थो वा यस्य शान्तिः स जीवति ॥ ५४ ॥

यह गृहस्थों का धर्म नहीं है—यह सोचना ( तर्क-वितर्क करना ) नहीं चाहिये; क्योंकि चाहे भवन में रहे अथवा वन में रहे, जो शान्ति प्राप्त करता है; वही ( वास्तव में ) जीता है ॥ ५४ ॥

घर्मार्ता प्रविशन्त्यप्सु मेघात्सर्वः सुखायते।
दीपेन दृश्यते सर्वं योगो मानं न वै वयः ॥ ५५ ॥

धूप से दग्ध हुआ जल में प्रवेश कर, सुखी होता है; मेघ की वर्षा से सबको सुख होता है। दीपक से ( अन्धकार में भी ) सब कुछ दिखता है; इसी तरह किसी की आयु ( या वंश ) नहीं ( अपितु ) योग ही मान ( प्रमाण या आदरयोग्य ) होता है ॥ ५५ ॥

निवसन्ति वने केचिज्जरायां जातु मानवाः।
योगकर्मण्यसक्तास्ते व्रतभङ्गात्पतन्त्यधः ॥ ५६ ॥

कोई-कोई लोग कदाचित् बुढ़ापे में भी वन में निवास करते हैं, तब वे वहाँ योग कर्म में नहीं लगे रह सकते एवं अकर्मण्य हो जाते हैं; अतः व्रत के भंग हो जाने से उनका अधः पतन हो जाता है ॥ ५६ ॥

अन्ये गृहे स्थिताश्चापि स्वकर्मनिरताः सदा।
अप्रमत्ता विशुद्धास्ते पदं गच्छन्ति नैष्ठिकम् ॥ ५७ ॥

अन्य ( दूसरे ) घर में ही रहकर सदा अपने कर्म में लगे रहते हैं। वे अप्रमत्त ( सावधान ) होकर पूर्ण शुद्ध रहते हैं और इस प्रकार नैष्ठिक पद को प्राप्त करते हैं ॥ ५७ ॥

तमोऽब्धौ वासनावीचौ जन्माम्भसि निमज्जिताः।
वीर्यसुमत्यरित्राभ्यां ज्ञाननावा तरन्ति ते ॥ ५८ ॥

इस प्रकार के ये लोग अज्ञानान्धकाररूपी सागर में, वासनारूपी लहरों

के बीच, जन्मरूपी जल में डूबते-उतराते हैं, परन्तु वीर्य एवं अच्छी बुद्धि रूपी पतवारों के द्वारा, ज्ञानरूपी नाव से वे पार हो जाते हैं" ॥ ५८ ॥

एवं ज्ञात्वा नृपो धर्म्यं ज्ञानं मुनिमुखात्ततः ।
नश्वरं राज्यमालोच्य श्रावस्तीं पुनरायय़ौ ॥ ५९ ॥

तब राजा उन मुनि गौतम के मुख से इस प्रकार धर्मयुक्त ज्ञान प्राप्त कर तथा अपने राज्य को नश्वर समझकर श्रावस्ती को पुनः लौट गया ॥ ५९ ॥

तथाभूतं नृपं दृष्ट्वा तीर्थिका ईर्ष्यया मुनिम् ।
शक्तिं दर्शयितुं प्रोचुः साग्रहं जेतुमिच्छया ॥ ६० ॥

राजा को इस प्रकार ( झुकते हुए ) देखकर, उन तीर्थिक ( पंडित ) लोगों ने ( ईर्ष्या के साथ ) मुनि ( तथागत ) से, उन्हें जीतने की इच्छा से आग्रह करते हुए, दिव्य शक्ति ( का चमत्कार ) प्रदर्शित करने के लिये कहा ॥ ६० ॥

भूपतेरनुरोधेन जितात्मा मुनिपुङ्गवः ।
दर्शयितुं स्वमाहात्म्यं दिव्यं समुपचक्रमे ॥ ६१ ॥

राजा के भी अनुरोध ( करने ) पर उन जितेन्द्रिय मुनिपुंगव ने अपना दिव्य माहात्म्य ( चमत्कार ) दिखाना प्रारम्भ किया ॥ ६१ ॥

ताराव्यूहं प्रभाहीनं कुर्वन् रविरुदेति हि ।
तथा स्वतेजसा दीप्त उदगात्तु विनायकः ॥ ६२ ॥

जिस प्रकार सूर्य, तारकसमूह को प्रभाहीन करके, उदित होता है; उसी प्रकार वे तथागत अपने तेज से प्रदीप्त होकर उदित ( प्रकाशित ) हुए ॥ ६२ ॥

अपि चान्यां महाश्चर्यां दिव्यां शक्तिं प्रदर्श्य वै ।
नानामतगुरून् सर्वांस्तान् विजित्य तुतोष सः ॥ ६३ ॥

और भी दूसरी बहुत सी अत्यन्त आश्चर्यजनक दिव्य शक्तियों का प्रदर्शन करके, तथा उन सब विविध मतमानी गुरुजनों को पराजित कर, उन्होंने सन्तुष्ट किया ॥ ६३ ।

श्रावस्तीवासिभिः सम्यक् पूजितः सिद्धिदर्शनात् ।
धर्मं ग्राहयितुं बुद्धो मातरं त्रिदिवं ययौ ॥ ६४ ॥

सिद्धि का दर्शन हो जाने के कारण, उन श्रावस्तीवासियों के द्वारा पूजित वे बुद्ध अपनी माता को धर्म की दीक्षा देने के लिए त्रिदिव ( स्वर्ग ) को चले ( ऊपर चढ़ ) गये ॥ ६४ ॥

दिदीक्षे मातरं तत्र चातुर्मास्यमुवास च ।
भिक्षां जग्राह देवेभ्यः प्रतस्थेऽतो भुवं प्रति ॥ ६५ ॥

वहाँ उन्होंने माता को दीक्षा दी । वहाँ चतुर्मास निवास किया एवं देवों से भिक्षा ग्रहण कर पुनः पृथ्वी की ओर प्रस्थान किया ॥ ६५ ॥

देवाः शान्तिमुपागताः सुमनसः स्वे स्वे विमाने स्थिता
नेत्रैस्तं त्वनुसंपतन्त इव ते दूरादपश्यँश्चिरम् ।
उत्का भूपगणाः पतङ्गप्रतिमं सम्मानयन्तो भुव-
श्चोच्चैः साञ्जलयो जगुर्जयरवं नेमुस्त ऊर्ध्वाननाः ॥ ६६ ॥

इति श्रीरामचन्द्रदासकृते उत्तरबुद्धचरितमहाकाव्ये
"जेतवनस्वीकृति"र्नाम विंशतितमः सर्गः

देवगण शान्ति को प्राप्त हुए और स्वच्छ हृदय से आकाश में अपने अपने विमानों पर बैठे हुए, अपने नेत्रों से उन्होंने नीचे ( पृथ्वी की ओर ) अनुकरण करने की भाँति ( नेत्रों द्वारा नीचे गिरने के समान ) बुद्ध को दूर से बहुत देर तक देखा और पृथ्वी से बहुत से राजाओं ने ऊँचा मुख करके, सूर्य के समान तेजस्वी उन बुद्ध का सम्मान करते हुए, हाथ जोड़कर, ऊँचे स्वर में, उनका जयजयकार करते हुए, उन्हें प्रणाम किया ॥ ६६ ॥

यह श्रीरामचन्द्रदासकृत उत्तरबुद्धचरित महाकाव्य में
"जेतवन-स्वीकृति" नामक बीसवाँ सर्ग
समाप्त हुआ

---

# अथ एकविंशः सर्गः

## प्रव्रज्यास्रोतः

### प्रव्रज्यास्रोत

[ संन्यास का झरना ]

देवांश्च मातरं स्वर्गे दीक्षयित्वा तथागतः।
दीक्षितव्याञ्जनाँश्चान्यात् भुवि बभ्राम दीक्षितुम् ॥ १ ॥

स्वर्ग में अपनी माता तथा देवों को दीक्षा देकर तथागत ने भू ( लोक —पृथ्वी ) पर अन्य दीक्षा पाने योग्य लोगों को दीक्षित करने के लिये भ्रमण किया ॥ १ ॥

ज्योतिष्कं जीवकं शूरं श्रोणमङ्गदकं तथा।
पञ्चपर्वतमध्यस्थे ग्रामे दीक्षितवानसौ ॥ २ ॥

उन्होंने पाँच पहाड़ों के बीच में बसे गाँव में, ज्योतिष्क, जीवक, शूर, श्रोण एवं अङ्गदक को दीक्षा दी ॥ २ ॥

अभयोपालिश्रीगुप्तन्यग्रोधानां महीभुजाम्।
मतं निवर्तयामास मतद्वयन्तानुगामिनाम् ॥ ३ ॥

तथा उन्होंने दो अन्तों ( नित्यता और विनाश ) के मत को मानने वाले, अभय, उपालि, श्रीगुप्त, न्यग्रोध आदि राजाओं को उस मत से विमुख कर दिया ॥ ३ ॥

दिदीक्षे पुष्करं बुद्धो गान्धारनृपतिं तथा।
योऽसौ दीक्षितमात्रेण राज्यलक्ष्मीं द्रुतं जहौ ॥ ४ ॥

बुद्ध ने गान्धार ( देश ) के राजा पुष्कर को भी दीक्षा दी; जिन्होंने दीक्षित होते ही शीघ्र ही राज्य-लक्ष्मी का त्याग कर दिया ॥ ४ ॥

ततो विपुलतेजस्वी विपुले पर्वते पुनः।
हैमवतं च सातान्नं यक्षौ द्वौ समुपादिशन् ॥ ५ ॥

तब फिर उन महान् तेजस्वी ( बुद्ध ) ने विपुल नामक पर्वत पर हैमवत और साताग्र नामक दो यक्षों को भी उपदेश दिया ॥ ५ ॥

जीवकाम्रवने रात्रौ भार्यापञ्चशतान्वितम्।
दिदीक्षेऽजातशत्रुं स धर्मे धर्मविदां वरः ॥ ६ ॥

जीवक के आम्रवन में रात्रि के समय ( अपनी ) पाँच सौ भार्या के साथ अजातशत्रु को धर्मवेत्ताओं में श्रेष्ठ बुद्ध ने बौद्ध धर्म में दीक्षित किया ॥ ६ ॥

पाषाणपर्वते बुद्धः पारायणमहीसुरम्।
आधीगाथोक्तज्ञानेन दिदीक्षे शम्परायणम् ॥ ७ ॥

तब बुद्ध ने पाषाण पर्वत पर कल्याण ( शान्ति ) में परायण, पारायण नामक श्रेष्ठ ब्राह्मण को आधी गाथा के सौम्य अर्थ द्वारा दीक्षित किया ॥ ७ ॥

साध्वी नन्दस्य जननी चाददे वेणुकण्टके।
दीक्षां ततो ददर्शासौ भुवि गुप्तं धनं दृशा ॥ ८ ॥

तब नन्द की साध्वी माता ने वेणुकंटक नामक स्थान पर ( बुद्ध से ) दीक्षा ली। वह भूमि में छिपे धन को अपनी दृष्टि से देखा करती थी ॥ ८ ॥

स्थाणुमती पुरे रम्ये कूटदत्तद्विजं जिनः।
धर्मे प्रवेशयामास तं यियक्षुं निरामयम् ॥ ९ ॥

तब उन जितेन्द्रिय बुद्ध ने स्थाणुमती नामक सुन्दर नगर में यज्ञ की इच्छा करने वाले नीरोग कूटदत्त ब्राह्मण को निर्वाण धर्म में प्रवेश कराया ( दीक्षा दी ) ॥ ९ ॥

ततः पञ्चशिखादीनामसुराणां दिवौकसाम्।
धर्मे बभूव विश्वासो विदेहाह्नन्वग दृढम् ॥ १० ॥

तब विदेह नामक पर्वत पर पंचशिख आदि राक्षसों ( असुरों ) और सुरों को धर्म में दृढ़ विश्वास हो गया ॥ १० ॥

श्रेष्ठ पिङ्गलचण्डाश्च दण्डश्वेतादयः पुरे।
अङ्गे नागास्तथा यक्षः पूर्णभद्रश्च दीक्षिताः ॥ ११ ॥

तब अङ्ग नगर में, श्रेष्ठ, पिंगल, चण्ड, दण्ड और श्वेत आदि नाग ( साँप ) तथा पूर्णभद्र नामक यक्ष दीक्षित हुए ॥ ११ ॥

केन्यशैलद्विजश्रेष्ठौ तपन्तावापणे पुरे ।
स्वर्गेप्सू तौ तु बुद्धेन नीतौ निर्वाणवर्त्मनि ॥ १२ ॥

आपण नामक नगर में स्वर्ग की इच्छा से तप करने वाले केन्य और शैल नामक श्रेष्ठ ब्राह्मणों को बुद्ध ने निर्वाण के मार्ग में लगा दिया ॥ १२ ॥

सौदासेन समः क्रूरश्चाङ्गुलिमालभूसुरः ।
गुह्यकानां समक्षं स ऋद्ध्या तेन विनामितः ॥ १३ ॥

उन भगवान् बुद्ध ने सौदास के समान क्रूर ( दुष्ट ) अंगुलिमाल नामक ब्राह्मण को, अपनी दिव्य शक्ति ( ऋद्धि ) के प्रभाव से, गुह्यकों के सामने ही विनम्र बना दिया ॥ १३ ॥

भद्रलोकस्य भद्रे स ततः कस्यापि सूनवे ।
मेण्ढकाय च दान्ताय सम्पन्नाय सुखात्मने ॥ १४ ॥

पूर्णभद्रेण तुल्याय धनाढ्याय विनायकः ।
उदाराय ददौ दिव्यां सम्यग्दृष्टिं महातपाः ॥ १५ ॥

तब भद्र में किसी एक भद्र पुरुष के शान्त, दान्त, उदार, समृद्ध एवं सुखी पूर्णभद्र के समान धनी मेण्ढक नामक पुत्र को महातपस्वी बुद्ध ने दिव्य सम्यग दृष्टि प्रदान की ॥ १४, १५ ॥

ब्रह्मायुषं ब्रह्मतुल्यं ततो दीर्घायुषं पुनः ।
विदेहनगरेऽजैषीच्छास्त्रार्थे वदतां वरः ॥ १६ ॥

तब फिर विदेह नगर में उन श्रेष्ठ वक्ता ने ब्रह्मा के समान दीर्घायु वाले ब्रह्मायु को शास्त्रार्थ में जीता ॥ १६ ॥

राक्षसो मर्कटो नाम वैशाल्यास्तु जलाशये ।
मांसभक्षी महाक्रूरः सोऽपि बुद्धेन दीक्षितः ॥ १७ ॥

और उन्होंने वैशाली के जलाशय में रहने वाले अत्यन्त दुष्ट मांसभक्षी मर्कट नामक राक्षस को भी दीक्षित कर लिया ॥ १७ ॥

उत्तरः सत्यकः सिंहः सर्वे लिच्छविनः स्मृताः ।
तेऽपि संदीक्षितास्तेन करुणापूर्णचेतसा ॥ १८ ॥

तथा करुणामय हृदय वाले उन भगवान् बुद्ध ने उत्तर, सत्यक, सिंह तथा सभी लिच्छवियों को दीक्षित कर लिया ॥ १८ ॥

भद्राख्यमार्यकर्मा स यक्षं बुद्धः सदाशयम् ।
दिदीक्षे सौगते धर्मे तत्रालकावतीपुरे ॥ १९ ॥

और अलकावती नगरी में आर्यकर्मा उन बुद्ध ने अच्छे विचारों वाले भद्र नाम के यक्ष को सुगत के धर्म में दीक्षित किया ॥ १९ ॥

यक्षमाटविकं चैव कुमारं हस्तकं तथा ।
पर्यटन् स महारण्ये दिदीक्षे भगवान् हितम् ॥ २० ॥

उन भगवान् बुद्ध ने घने जंगल में घूमते हुए आटविक ( जंगली ) यक्ष को और कुमार हस्तक को हितकारी शिक्षा दी ॥ २० ॥

नागायनं च यक्षेशं निर्वाणं समुपादिशत् ।
निर्वाणदर्शिनं बुद्धं ननाम स च यक्षराट् ॥ २१ ॥

और नागायन नामक यक्षराज को उन्होंने निर्वाण का उपदेश दिया । उस यक्षराज ने भी निर्वाणदर्शी ( निर्वाण को देखने वाले ) उन बुद्ध को प्रणाम किया ॥ २१ ॥

पश्चादुपादिशच्छास्ता गयायां टङ्कितानृषीन् ।
शूचीलोमखरौ चापि यक्षौ संक्रूरकर्मिणौ ॥ २२ ॥

तत्पश्चात् उन शास्ता ( जितेन्द्रिय ) बुद्ध ने गया में टंकित ( गुफाओं में रहने वाले ) ऋषियों को तथा शूचीलोम और खर नामक दो क्रूरकर्मा यक्षों को भी धर्म का उपदेश दिया ॥ २२ ॥

भागिनेयोऽसितस्यासीद्वरः कात्यायनो द्विजः ।
काश्यां दशबलेनासौ सम्यक् प्रव्राजितस्ततः ॥ २३ ॥

तब फिर काशी में उन दशबल बुद्ध ने असित के भानजे श्रेष्ठ कात्यायन नामक ब्राह्मण को पूर्ण रूप से दीक्षित किया ॥ २३ ॥

ततो दिव्यप्रभावोऽसौ गत्वा शूर्पारकं पुरम् ।
स्तवकर्णीति विख्यातं श्रेष्ठिनं समुपादिशत् ॥ २४ ॥

तब दिव्य प्रभाव वाले उन गौतम ने शूर्पारक नगर में जाकर स्तवकर्णी नामक सुप्रसिद्ध सेठ को उपदेश दिया ॥ २४ ॥

योऽसौ श्रद्धातिरेकेण दिव्यमामोदपूरितम् ।
विहारं चन्दनाढयं तन्निर्माय मुनये ददौ ॥ २५ ॥

और उस ( स्तवकर्णी ) ने अतिशय श्रद्धा होने के कारण एक दिव्य, आनन्द से पूर्ण, चन्दन से भरा-पुरा विहार बनाकर मुनि ( गौतम ) को दे दिया ॥ २५ ॥

तापसं कपिलं निन्ये महीवत्यां स बौद्धताम् ।
यत्रैकोऽस्ति शिलाखण्डः पदचक्राङ्कितो मुनेः ॥ २६ ॥

और महीवती नगरी में—जहाँ कि मुनि के चरणों के चक्र से ( शोभित अंकित ) एक शिलाखण्ड है—उन्होंने ( मुनि ने ) कपिल नामक तपस्वी को बौद्धता को प्राप्त कराया ॥ २६ ॥

वरणे वारणं यक्षं मथुरायां भयानकम् ।
गर्दभं च मुनिश्रेष्ठो दिदीक्षे दीनवत्सलः ॥ २७ ॥

वरण में वारण नामक यक्ष को और मथुरा में भयानक गर्दभ ( गधे ) को उन दीनदयालु श्रेष्ठ मुनि ने दीक्षित किया ॥ २७ ॥

स्थूलकोष्ठकपुर्यां स राष्ट्रपालाभिधं नरम् ।
दिदीक्षे यस्य चैश्वर्यं नृपैश्वर्यसमं विदुः ॥ २८ ॥

और उन्होंने 'स्थूल-कोष्ठक' नाम की नगरी में राष्ट्रपाल नाम के व्यक्ति को, जिसका ऐश्वर्य राजाओं के ऐश्वर्य के समान था, दीक्षित किया ॥ २८ ॥

वेदज्ञस्तु विरञ्जायां ब्रह्मणा सदृशो द्विजः ।
तथा कल्माषदम्ये च भारद्वाजः समाश्रितो ॥ २९ ॥

विरंजा नगरी में ब्रह्मा के समान वेदज्ञ ब्राह्मण ने तथा कल्माषदम्य नामक स्थान में भारद्वाज ने दीक्षा ली ॥ २९ ॥

निर्ग्रन्थानां च पुत्राणां नप्तृणां सभियस्य सः ।
तीर्थिकानां च श्रावस्त्यां नुनोद श्रीघनस्तमः ॥ ३० ॥

इसके बाद श्रावस्ती में जाकर मुनि ने निर्ग्रन्थों, नप्तृपुत्रों, सभिय तथा तीर्थिकों ( पंडितों ) का अज्ञान रूपी अन्धकार दूर किया ॥ ३० ॥

ततः पुष्कलसादी च याज्ञिकः कोसलाधिपः ।
जातिश्रेणीद्विजश्चापि बुद्धधर्मेण दीक्षिताः ॥ ३१ ॥

तब पुष्कल सादी याज्ञिक, कोसलराज तथा जातिश्रेणी ब्राह्मण भी बुद्ध धर्म में दीक्षित किये गये ॥ ३१ ॥

शारिकां च शुकं चैव विद्यां शेतविके वने ।
मुनिः प्रपाठयामास द्विजवच्छिक्षकोत्तमः ॥ ३२ ॥

और शेतविक वन में उत्तम शिक्षक उन मुनि ने ब्राह्मण के समान एक मैना तथा एक तोते को ( दो द्विजों को ) विद्या ( ज्ञान ) पढ़ाई ॥ ३२ ॥

जङ्गाली नागरश्चैव क्रूरकर्मा च कालकः ।
कुम्भीरश्च तथैवेते बौद्धं धर्मं प्रजग्रहुः ॥ ३३ ॥

जंगाली, नागर, क्रूरकर्मा, कालक एवं कुम्भीर—इन सब ने बौद्ध धर्म ग्रहण किया ॥ ३३ ॥

मध्ये स भार्गसानां वै मुनिर्यक्षं तु भेषकम् ।
दिदीक्षे पितरौ वृद्धौ नकुलस्य तथैव च ॥ ३४ ॥

तब उन्होंने भार्गसों के बीच रहने वाले भेषक नामक यक्ष को दीक्षा दी तथा नकुल के वृद्ध माता-पिता को भी उसी प्रकार दीक्षा दी ॥ ३४ ॥

धनाढयो घोषलश्चान्ये कौशाम्ब्यां ये महाजनाः ।
कुब्जोत्तराश्च नार्योऽपि सद्धर्मे दीक्षितास्तदा ॥ ३५ ॥

और कौशाम्बी ( नगरी ) में जो धनाढ्य घोषल तथा अन्य महाजन ( धनी ) थे, तथा कुब्जा, उत्तरा आदि स्त्रियाँ थीं, उन सबको उस समय सद्धम में दीक्षित किया ॥ ३५ ॥

अपलापाभिधः सर्पो गान्धारे श्रीघनेन वै ।
कृतो विनयसंपन्नो निर्विषश्च जितेन्द्रियः ॥ ३६ ॥

और उन गौतम ने गांधार में रहने वाले अपलाप नामक सर्प को (अपने प्रभाव से) नम्र, विषहीन और जितेन्द्रिय बना दिया ॥ ३६ ॥

ततः कालोपमान् सर्पांल्लोकान् दग्धुमलं च तान् ।
दीक्षयित्वा क्रमेणासौ तेभ्यो धर्ममुपादिशत् ॥ ३७ ॥

तब फिर काल के समान संसार को जला देने में समर्थ बहुत से सर्पों को क्रमशः दीक्षा देकर उन्होंने उन्हें धर्म का उपदेश किया ॥ ३७ ॥

अन्येषां भूचराणां वै व्योमगानां च दीक्षणात् ।
यशो ववर्ध बुद्धस्य समुद्रः पार्वणो यथा ॥ ३८ ॥

अन्य थलचर और नभचर प्राणियों को दीक्षा देने से बुद्ध का यश, पूर्णिमा के (दिन) समुद्र के समान बढ़ने लगा ॥ ३८ ॥

तस्योन्नतिं समालोक्य देवदत्तश्चुकोप ह ।
द्वेषेण संयमं त्यक्त्वा कुकृत्यं कृतवान् वहु ॥ ३९ ॥

परन्तु बुद्ध की इस उन्नति को देखकर देवदत्त क्रुद्ध हो गया। द्वेष के कारण संयम को छोड़कर वह बहुत से कुकृत्य करने लगा ॥ ३९ ॥

सङ्घे भेदं चकारासौ संकलुषेण चेतसा ।
स्नेहस्यापेक्षया तस्मै क्लेशं दातुं समुद्यतः ॥ ४० ॥

मन में द्वेष होने के कारण उसने संघ में फूट डाल दी तथा उनसे स्नेह करने के बदले, उन्हें कष्ट देने को तैयार हो गया ॥ ४० ॥

गृध्रकूटाच्छिलामेकां पातयामास मूढधीः ।
लक्ष्यं मुनिमनाक्रम्य पपातान्यत्र खण्डशः ॥ ४१ ॥

उस मुर्ख बुद्धि (वाले) ने गृध्रकूट पर्वत से एक शिला मुनि पर गिराई, पर (सुयोग से) वह मुनि पर न गिर कर अन्यत्र गिरी और टुकड़े-टुकड़े हो गई ॥ ४१ ॥

राजमार्गे तमुद्दिश्य गजस्त्यक्तोऽन्तकोपमः ।
झञ्झावात इवाधावत् प्रलयाम्भोदनिःस्वनः ॥ ४२ ॥

उस (देवदत्त) ने बुद्ध को ही लक्ष्य करके, राजपथ पर, एक यमराज

के समान हाथी को छोड़ा जो आँधी के समान दौड़ रहा था तथा प्रलय के मेघ सदृश गरज रहा था ॥ ४२ ॥

हतानां तेन मर्त्यानां शवेनान्त्रेण चास्थिभिः ।
रुधिरेण च पन्थानो राजगृहस्य दुर्गमाः ॥ ४३ ॥

उस ( यमस्वरूप ) हाथी के दौड़ने से मारे गये लोगों के शवों, अँतड़ियों एवं हड्डियों तथा रक्त की अधिकता से सभी राजमार्ग पर ( दुर्गम हो जाने के कारण ) चलना कठिन था ॥ ४३ ॥

ऊरून् विदारयामास दन्ताघातेन दुर्मदः ।
अन्त्राण्यादाय हस्तेन चिक्षेप भृशमम्बरे ॥ ४४ ॥

वह ( हाथी ) मतवाला होकर दाँतों के आघात से जंघाओं को फाड़ रहा था तथा अपनी सूँड़ से अँतड़ियों को उठा-उठा कर आकाश में फेंक रहा था ॥ ४४ ॥

तदा तस्याभवद्रूपं गजस्य रुधिरोक्षितम् ।
प्रलयान्ते करालस्य कालस्येव भयानकम् ॥ ४५ ॥

उस समय खून में सने हुए उस हाथी का रूप, प्रलय समय के भयानक विकराल काल के समान हो गया था ॥ ४५ ॥

पूतिमांसवसालिप्तं रक्ताक्तं क्रोधमूर्च्छितम् ।
भ्रमन्तं तं विलोक्याशु पौरा भीताः प्रदुद्रुवुः ॥ ४६ ॥

पूति ( सड़े हुए ) मांस तथा चर्बी से लिपटे हुए, रक्त में रँगे क्रोध से मतवाले होकर दौड़ने वाले उस हाथी को देखकर, शीघ्र ही डरकर नगरवासी भागने लगे ॥ ४६ ॥

कालदण्डनिभं भीमं प्रलयाग्निशिखेक्षणम् ।
बृंहन्तं परुषं वीक्ष्य पौरा हाहेति चुक्रुशुः ॥ ४७ ॥

उस हाथी को कालदण्ड के समान भयंकर, प्रलय की अग्नि की ज्वाला के समान आँखों वाले, गरजने वाले, कठोर दुष्ट रूप में देखकर, नगरवासी हाहाकार करने लगे ॥ ४७ ॥

केचित्पुराद्बहिः　केचिद् गृहान्तरमुपद्रुताः ।
केचित्पलायिताः स्वं च जुगुपुर्भयविह्वलाः ।। ४८ ।।

कोई तो नगर के बाहर भागे, कोई दूसरों के घरों के भीतर घुस गये। कोई स्वयं को लेकर तेजी से भागे तथा कोई भयभीत होकर छिपने लगे ।। ४८ ।।

बुद्धं मा क्लेशयेदित्थं विचिन्त्य हरिविक्रमाः ।
त्यक्तप्राणभयाः केचिदन्वधावन् गजं प्रति ।। ४६ ।।

सिंह के समान पराक्रम वाले कुछ लोग यह सोचकर कि कहीं यह हाथी बुद्ध को पीड़ित न करे, अपने प्राणों की भी परवाह न कर, हाथी की ओर दौड़ पड़े ।। ४६ ।।

केचिद्धस्तिपकं प्रोचुस्ततर्जुः करिणं तथा ।
अन्ये प्रलोभयामासुः केचित्प्राञ्जलि तुष्टुवुः ।। ५० ।।

कोई महावत को पुकारने लगे, कोई हाथी को ही डराने लगे, कोई उसे लोभ देने लगे तथा कोई हाथ जोड़कर प्रसन्न करने लगे ।। ५० ।।

सौधोपरि स्त्रियो बाहून् प्रसार्य रुरुदुर्भृशम् ।
काश्चित्करैश्च चक्षूंषि रुरुधुर्भयविक्लवाः ।। ५१ ।।

महलों के ऊपर बैठी हुई स्त्रियाँ, भुजाएँ ( हाथ ) उठाकर ( फैलाकर ) रोने लगीं। कोई-कोई भय से व्याकुल होकर हाथों से आँखें ढाँककर रोने लगीं ।। ५१ ।।

हिंसापरो गजः क्रूरो बुद्धस्याभिमुखं द्रुतम् ।
वार्यमाणोऽपि शोकार्तैर्लोकैरभिससर्प सः ।। ५२ ।।

वह दुष्ट, हिंसा करने को तैयार हाथी, दुःख से व्याकुल लोगों के द्वारा रोका जाने पर भी, शीघ्र ही बुद्ध के सम्मुख ही दौड़कर आ गया ।। ५२ ।।

तथापि सुगतो मौनी शान्तोऽविचलमानसः ।
नाबिभेन्न च संतस्थे न चुकोप त्वगात्पुरः ।। ५३ ।।

तो भी सुगत ( बुद्ध ) मौन, शान्त, अविचल और स्थिरचित्त रहे न। वे डरे, न खड़े ही हुए और न क्रुद्ध ही हुए अपितु आगे चलते ( बढ़ते ) गये ।। ५३ ।।

करुणा सर्वभूतेषु मैत्री यस्य च यं जिनम्।
देवा अनुययुस्तस्मै कथं द्रुह्यान्महागजः ॥ ५४ ॥

सब प्राणियों पर जिस (बुद्ध) की दया और मित्रता है तथा जिस जितेन्द्रिय बुद्ध का अनुगमन देव भी करते हैं; उसी बुद्ध के प्रति महागज (महान् हाथी या महापाप से—मतवालापन रूप से—उत्पन्न) कैसे द्रोह कर सकता है? ॥ ५४ ॥

पलायिता गजं वीक्ष्य शिष्यास्ते दूरतोऽनुगाः।
छायेवानन्द एकाकी चान्वगच्छत्तु केवलम् ॥ ५५ ॥

उस मतवाले हाथी को देखकर, बुद्ध के वे सभी अनुचर शिष्य दूर से ही भाग गये (किन्तु) केवल एक आनन्द ही छाया के समान उनके पीछे चलते रहे ॥ ५५ ॥

धावन् स कुपितो नागो यदाभ्यर्णं समाययौ।
मुनेर्दिव्यप्रभावेण चान्तर्बुद्ध इवाभवत् ॥ ५६ ॥

दौड़ता हुआ वह क्रुद्ध हाथी जब निकट आ गया तो मुनि के दिव्य प्रभाव से अन्तर्बुद्ध (भीतर से ज्ञान के जागरण वाला) के समान हो गया ॥ ५६ ॥

नामयित्वा स्वकायं स छिन्नपक्षमिवाचलम्।
शुण्डया नतमूर्धा सन् पस्पर्श चरणं मुनेः ॥ ५७ ॥

उसने अपने शरीर को झुकाकर, कटे हुए पंखों वाले पहाड़ की भाँति, सूँड़ नीची करके, सिर नवाकर, मुनि (बुद्ध) के चरणों का स्पर्श किया॥५७॥

अंशुमानिव सर्वज्ञो वारिवाहनिभस्य वै।
मस्तके गजराजस्य निदधे ललितं करम् ॥ ५८ ॥

जिस प्रकार सूर्य बादलों पर अपनी किरणों के कर (हाथ) फैलाता है उसी प्रकार उन सर्वज्ञ (मुनि बुद्ध) ने उस गजराज के मस्तक पर अपना ललित कर (हाथ) रखा ॥ ५८ ॥

वीक्ष्य निश्चलकर्णं तं सजलं मेघसन्निभम्।
नतं तस्मै समर्हाय शमं धर्मं समादिशत् ॥ ५९ ॥

सजल मेघ के समान, अचल कानों वाले उस हाथी को झुका हुआ देखकर, उस महान् को ( उन मुनि ने ) शम धर्म का उपदेश किया ॥ ५९ ॥

मा हिंस्याः सर्वभूतानि निर्मन्तुं तु विशेषतः ।
हिंसया नाग न श्रेयो लभते सप्तजन्मसु ॥ ६० ॥

"सभी प्राणियों की हिंसा मत करो, विशेषकर निरपराध की तो और भी नहीं । हे नाग ! ( हाथी ) हिंसा से ( आगे के ) सात जन्मों में भी श्रेय ( कल्याण ) की प्राप्ति नहीं होती ॥ ६० ॥

कामो मोहो घृणा चेति दुर्जयो हि मदत्रयम् ।
विजित्य मुनयो मुक्तास्त्वं गजेन्द्र ! तथा भव ॥ ६१ ॥

काम, मोह और घृणा–ये तीन मद ( मतवालेपन ) जीतने में बड़े कठिन हैं । इनको जीतकर ही मुनि मुक्त होते हैं । हे गजराज ! तुम भी वैसे ही हो जाओ ॥ ६१ ॥

तमःप्रसक्तिमुत्सृज्य याहि स्वाभाविकीं गतिम् ।
कामासक्त्या पुनर्नाग भवपङ्के तु मा पत ॥ ६२ ॥

अन्धकार ( अज्ञान ) की आसक्ति को छोड़कर तुम स्वाभाविक गति को प्राप्त करो । हे हस्तिन् ! तुम कामासक्ति के कारण फिर से संसार रूपी कीचड़ में मत गिरना ॥ ६२ ॥"

श्रुत्वा तद्वचनं नागो निर्मदः प्रकृतिं गतः ।
आनन्दं परमं लेभे पीतामृत इवाभवत् ॥ ६३ ॥

( बुद्ध के ) ऐसे वचन सुनकर वह हाथी मदहीन होकर, स्वाभाविक रूप को प्राप्त हो गया । उसने अमृत पीने वाले के समान परम ( अत्यन्त ) आनन्द को प्राप्त किया ॥ ६३ ॥

त्यक्तामर्षो गजस्तूर्णं ननाम मुनिपादयोः ।
ततो जयरवं होचुर्हर्षोत्फुल्लानना नराः ॥ ६४ ॥

क्रोध को छोड़कर शीघ्र ही उस हाथी ने मुनि के चरणों में प्रणाम किया । तब हर्ष से प्रसन्नमुख लोगों ने ( बुद्ध का ) जय-जयकार किया ॥६४॥

जगुर्मुनियशः शुभ्रं केचिदूचुर्गजार्यताम् ।
आनर्चुः सुगतं चान्ये गजराजं तथाऽपरे ॥ ६५ ॥

उन्होंने मुनि के धवल यश को गाया। कोई कोई हाथी की श्रेष्ठता का बखान करने लगे। कोई सुगत (बुद्ध) को हाथ जोड़ने लगे तो दूसरे कोई हाथी की प्रशंसा करने लगे ॥ ६५ ॥

नगराद्राजगेहाच्च समागत्य सहस्रशः ।
मुनिं सम्मानयामासुर्नार्यो वस्त्रविभूषणैः ॥ ६६ ॥

और नगर तथा राजभवनों से हजारों की संख्या में आ-आकर नारियाँ, वस्त्रों एवं आभूषणों के द्वारा (प्रदान कर) मुनि का सम्मान करने लगीं ॥६६॥

गजश्चाधीतसद्विद्यश्छात्रतुल्यो नताननः ।
अन्तिके मुनिवर्यस्य तस्थौ सम्मीलितेक्षणः ॥ ६७ ॥

और हाथी भी एक अच्छी विद्या प्राप्त किये हुए विद्यार्थी के समान विनीत हो, सिर झुकाकर, नेत्र बन्द करके मुनिवर्य (बुद्ध) के निकट बैठ गया ॥ ६७ ॥

धर्मे श्रद्धा न यस्यासीत्तदा तस्याभवद् भृशम् ।
येषां च पूर्वमल्पासीत्तेषां भूरि दृढाऽभवत् ॥ ६८ ॥

जिन लोगों को पहिले धर्म में श्रद्धा नहीं थी, उन्हें भी अब श्रद्धा हो गई। जिसे पहिले थोड़ी भी श्रद्धा थी उसकी श्रद्धा बहुत दृढ़ हो गई ॥ ६८ ॥

सौधादजातशत्रुश्च विलोक्य गजमानतम् ।
विस्मयं परमं लेभे बुद्धे श्रद्धां चकार च ॥ ६९ ॥

अजातशत्रु ने भी राजभवन से जब मतवाले हाथी को भी (बुद्ध के समक्ष) झुकते हुए देखा तो उसे अत्यन्त आश्चर्य हुआ और उसे भी बुद्ध में श्रद्धा हो गई ॥ ६९ ॥

धर्मार्थौ हि विवर्धेते कलौ याते कृतागमे ।
ववृधाते यशोधर्मौ तथा शौद्धोदनेः शुभौ ॥ ७० ॥

जिस प्रकार कलियुग के जाने और सतयुग के आने पर, धर्म और अर्थ दोनों की वृद्धि होती है उसी प्रकार बुद्ध के शुभ यश और धर्म दोनों वृद्धि को प्राप्त हुए ॥ ७० ॥

कृत्वा मुनौ दुष्टतयातिपापं
विनिन्दितं कर्म च देवदत्तः ।
राजा प्रजाभिर्मुनिभिश्च विप्रै-
र्विगर्हितोऽधो भुवने पपात ॥ ७१ ॥

इति श्रीरामचन्द्रदासकृते उत्तरबुद्धचरितमहाकाव्ये
"प्रव्रज्यास्रोतः" नाम एकविंशः सर्गः ॥

और देवदत्त अपनी दुष्टता के कारण मुनि के सम्बन्ध में अत्यन्त पाप और अतिनिन्दित कर्म करके, राजा, प्रजा, मुनि और विप्रों के द्वारा अत्यन्त निन्दित अधोलोक में ( नीचे के लोकों में ) जाकर गिरा ॥ ७१ ॥

यह श्रीरामचन्द्रदासकृत उत्तरबुद्धचरित महाकाव्य में "प्रव्रज्या स्रोत" नामक इक्कीसवाँ सर्ग समाप्त हुआ ।

———

# अथ द्वाविंशः सर्गः

## आम्रपाल्या उपवने

### आम्रपाली के उपवन में

कालक्रमेण संसारे दयां कृत्वा तथागतः ।
संस्थाप्य चात्मनो धर्मं निर्वाणे मतिमादधे ॥ १ ॥

तथागत ( बुद्ध ) ने समय बीतने पर संसार पर दया करते हुए, अपने धर्म की स्थापना करके निर्वाण की ओर अपनी बुद्धि (ध्यान) को लगाया ॥१॥

ततो राजगृहात्काले पाटलिपुत्रमाययौ ।
तन्नाम्ना तत्र विख्याते चैत्ये तस्थौ स कालवित् ॥ २ ॥

कुछ समय बाद वे राजगृह से पाटलिपुत्र को आये । वहाँ उसके नाम से प्रसिद्ध ( पाटलिपुत्र ) चैत्य में वे कालज्ञ ठहरे ॥ २ ॥

मगधाधिपतेर्मन्त्री वर्षकारो दृढं तथा ।
शरण्यं निर्ममौ दुर्गं तत्र लिच्छविनां कृते ॥ ३ ॥

मगधराज के मन्त्री वर्षकार ने वहाँ लिच्छवियों (से शान्ति बनाये रखने) के लिये एक दृढ़ शरण पाने योग्य किला बनवाया था ॥ ३ ॥

तस्मिन्देवान् धनं स्वर्गाद् ददर्शानयतो जिनः ।
लोके मुख्यपुरं ह्येतद्भवितेति जगाद सः ॥ ४ ॥

उस किले में स्वर्ग से धन लाते हुए देवों को जिन ( बुद्ध ) ने देखा । यह देखकर उन्होंने कहा—"विश्व में यह एक सुप्रसिद्ध एवं प्रमुख नगर होगा ॥ ४ ॥"

विधिना पूजितो बुद्धो वर्षकारेण कर्मवित् ।
गङ्गायाः सिन्धुभार्यायास्ततः कूलं समाययौ ॥ ५ ॥

वर्षकार ने कर्म को जानने वाले, उन बुद्ध की विधिवत् पूजा की । तब वे बुद्ध सिन्धुपत्नी गंगा के किनारे आये ॥ ५ ॥

द्वारेण निर्ययौ येन भगवाँस्तस्य नाम वै ।
गौतमद्वारमित्येतद्वर्षकारेण संज्ञितम् ॥ ६ ॥

भगवान बुद्ध जिस द्वार से होकर निकले, वर्षकार ने उस द्वार का नाम 'गौतम द्वार' रखा ॥ ६ ॥

भवाब्धेः पारदृश्वाऽसौ तीरमासाद्य योगवित् ।
तरतो नौकुलैश्चित्रैर्जनान् दृष्ट्वा व्यचिन्तयत् ॥ ७ ॥

संसार रूपी सागर के भी उस ( दूसरे ) पार तक देखने वाले, योग के जानने वाले, वे बुद्ध ( गंगा के ) किनारे पर आकर, अनेक प्रकार की चित्र-विचित्र नावों द्वारा लोगों को पार जाते हुए देखकर सोचने लगे— ॥ ७ ॥

जाह्नवीतरणं न स्यादुचितं नौकया मम ।
अतो योगबलेनैव गन्तव्यं पारमञ्जसा ॥ ८ ॥

"मैं भी ( भौतिक ) नाव से गंगा को पार करूँ—यह उचित नहीं है। अतः मुझे योगबल से ही ( शीघ्र ही ) उस पार जाना चाहिये" ॥ ८ ॥

ततोऽसौ पश्यतां दृष्टेरन्तर्धाय सशिष्यकः ।
डिड्ये योगबलेनैव पारं तु पवनात्ययः ॥ ९ ॥

तब वे देखने वालों की दृष्टि से ओझल होकर, अपने सब शिष्यों के साथ, योगबल से ही, वायु से भी अधिक वेग के साथ उस (दूसरे) पार आकाश मार्ग से चले गये ॥ ९ ॥

दुःखाब्धिर्ज्ञाननावैव तार्य एवं विदन्वशी ।
विना भौतिककोलेन गाङ्गं पारं ययौ मुनिः ॥ १० ॥

दुःख का सागर, ज्ञान की नाव से ही पार किया जाता है—यह जानने वाले उन जितेन्द्रिय मुनि ( बुद्ध ) ने सांसारिक ( लकड़ी की ) नाव के बिना ही गंगा को पार किया ॥ १० ॥

तदा तं मुनिमालोक्य संतीर्णाश्च तितीर्षवः ।
तरिष्यन्तश्च सर्वे ते विस्मयं परमं ययुः ॥ ११ ॥

उस समय उन मुनि को इस प्रकार पार गया हुआ देखकर, वहाँ जो लोग गंगा को पार करने वाले थे, जो लोग पार कर रहे थे, तथा जो पार कर चुके थे, वे सभी लोग आश्चर्य में पड़ गये ॥ ११ ॥

( उन्होंने ) अपने प्रभूत वचनामृतों से जगत् वृक्ष को सींचा, शिष्यों को धर्म में रमाया तथा उन्हें शोकरहित कर दिया ।। २९ ।।

उवापार्येषु सद्धर्ममार्याध्वानं निनाय तान् ।
अनार्यानपि सद्धर्मं कृपया समशिक्षयत् ।। ३० ।।

( उन्होंने ) आर्य पुरुषों में सद्धर्म को बोया, उन्हें आर्य मार्ग में पहुँचाया एवं अनार्यों को कृपापूर्वक सद्धर्म की शिक्षा दी ।। ३० ।।

युक्त्याऽन्यदर्शनं चासौ निराकृत्य विनायकः ।
प्रत्यक्षेण च योगेन दर्शयामास तात्त्विकम् ।। ३१ ।।

उस विनायक ने युक्ति से अन्य दर्शनों का निराकरण करके प्रत्यक्ष योग से तात्त्विक सिद्धान्त दर्शाया ।। ३१ ।।

अनात्मेदमनित्यं च दर्शयित्वाऽसुखं जगत् ।
उच्छ्रितं हि यशःकेतुं स्वकीयं वितताान सः ।। ३२ ।।

जगत् को अनात्मा, अनित्य तथा सुख-रहित दिखाकर ( बताकर ) अपनी उन्नत कीर्तिरूपी पताका को उड़ाया ।। ३२ ।।

निन्दया तस्य चित्तं हि न चुक्षोभ कदाचन ।
योगिनस्तस्य कामोऽभून्न च लोकप्रवृत्तिषु ।। ३३ ।।

उस योगी का चित्त निन्दा से कभी क्षुभित ( विचलित ) नहीं हुआ और लोकप्रवृत्ति में उनकी कभी इच्छा नहीं हुई ।। ३३ ।।

स्वयमुत्तीर्य लोकान् स मग्नान् मोहादतारयत् ।
स्वयं मुक्तश्च लोकस्य कर्मग्रन्थिममोचयत् ।। ३४ ।।

उन महात्मा ने स्वयं संसार से पार होकर, मोह में मग्न लोगों को पार उतारा और स्वयं मुक्त होकर संसार की कर्मग्रन्थि को मुक्त किया ।। ३४ ।।

धर्मप्रियः स सर्वज्ञो न्याय्यान्याय्यविदां वरः ।
उपदिश्योत्तमं ज्ञानं गतो नित्यां सतां गतिम् ।। ३५ ।।

न्याय, अन्याय के जानने वालों में श्रेष्ठ धर्मप्रिय वह सर्वज्ञ, उत्तम ज्ञान का उपदेश करके सज्जनों की नित्य गति को प्राप्त हुआ ।। ३५ ।।

गौरवे मेरुणा तुल्यः क्षमायां पृथिवीसमः ।
जलदेन समो दाता स मुनिर्नाद्य वर्तते ॥ ३६ ॥

गौरव में मेरु के तुल्य, क्षमा में पृथ्वी के तुल्य, तथा दाता में मेघ ( जलद ) के तुल्य वे मुनि आज नहीं हैं ॥ ३६ ॥

पुत्रवल्लालितो लोकः शिष्यवच्छिक्षितस्तथा ।
प्रजावत्पालितो येन स मुनिर्नाद्य वर्तते ॥ ३७ ॥

जिसने पुत्रवत् संसार का लालन किया, शिष्यवत् उसको ( संसार को ) शिक्षित किया तथा प्रजावत् पाला, वे मुनि आज नहीं हैं ॥ ३७ ॥

ससेनोऽनेकशः क्रुद्धः कामो यस्मात्पराजितः ।
मृत्युना सह संगम्य जेतुमद्य शशाक तम् ॥ ३८ ॥

कुपित काम सेनासहित अनेक बार जिस मुनि से पराजित हुआ, वह काम आज मृत्यु के साथ होकर, उस मुनि को जीतने में समर्थ हुआ ॥ ३८ ॥

इमे देवा नराश्चात्र मुह्यन्ते शोकसंप्लुताः ।
यतः शोकात्परेऽध्वानं शान्तं नाद्यापि लेभिरे ॥ ३९ ॥

ये देवता और मनुष्य, आज शोक से व्याकुल होते हुए मोह कर रहे हैं क्योंकि अभी भी शोक से परे शान्तिमार्ग को नहीं पाये हैं ॥ ३९ ॥

विश्वं स्वस्मिन् ददर्शासौ दर्पणे प्रतिबिम्बवत् ।
दिव्यश्रोत्रेण विश्वस्य शब्दं शुश्राव चान्तिके ॥ ४० ॥

उस मुनि ने, दर्पण में प्रतिबिम्ब की तरह, अपने में विश्व को देखा एवं दिव्य श्रोत्र से विश्व भर का शब्द समीप में सुना ॥ ४० ॥

रुरोह स्वरनालम्बो नानारूपं दधार सः ।
विवेश भुवि निर्बाधममग्नोऽचरदम्भसि ॥ ४१ ॥

उस सर्वज्ञ ने निरालम्ब होकर स्वर्गारोहण किया, अनेक रूप धारण किया, बाधारहित पृथ्वी में प्रवेश किया एवं बिना डूबे ही जल पर गमन किया ॥ ४१ ॥

विवेदातीतजन्मानि भुक्त्वासमिवाध्वगः ।
अतीन्द्रियान्मनोभावानन्येषां च बुबोध सः ॥ ४२ ॥

उस मुनि ने अपने अतीत जन्मों को उसी तरह जाना जैसे पथिक अपने पूर्वकृत निवास स्थान को जानता है, और दूसरों के भी अतीन्द्रिय मनोभाव को जाना ॥ ४२ ॥

चकर्त्त ह्याश्रयान् सर्वान् पूर्णकामो जितेन्द्रियः ।
सर्वैः साकं तु सर्वज्ञः समानं स व्यवाहरत् ॥ ४३ ॥

उस पूर्ण काम जितेन्द्रिय मुनि ने सब आश्रयों ( चित्तमलों ) को काटा तथा उस सर्वज्ञ ने सबके साथ समान व्यवहार किया ॥ ४३ ॥

चलचित्तानपि प्राज्ञो दिदीक्षे करुणामयः ।
उन्निन्ये च शनैस्तेषां मन्दचेतांसि पाटवम् ॥ ४४ ॥

करुणामय प्राज्ञ मुनि ने चंचल चित्त वालों को भी दीक्षा दी और उनके मन्द चित्त को कुशल ( पटु ) बनाया ॥ ४४ ॥

पीडितेभ्यो हताशेभ्यः कोऽत्र शान्तिं प्रदास्यति ।
तेषां छेत्स्यति को दोषान् दोषमुक्तः सदाऽऽत्मना ॥ ४५ ॥

अब यहाँ हताश एवं पीड़ितों को कौन शान्ति दिलायेगा ? तथा स्वयं विमुक्त ( निर्दोष ) होकर लोगों का दोष कौन छेदेगा ? ॥ ४५ ॥

भवसिन्धौ निमग्नाँश्च को दीनानुद्धरिष्यति ।
कोऽज्ञानवारिधौ मग्नाँस्तारयिष्यति नौरिव ॥ ४६ ॥

संसार सागर में डूबते हुए दुःखी जनों का उद्धार कौन करेगा ? तथा अज्ञान सागर में डूबते हुए को नौका की तरह कौन पार करेगा ॥ ४६ ॥

समुद्र इव शुष्कापश्चास्तसूर्यमिवाम्बरम् ।
भ्रष्टराज्य इवाधीशो लोकोऽयं मुनिना विना ॥ ४७ ॥

मुनि के बिना अब यह संसार जलरहित समुद्र की तरह, सूर्य के अस्त होने पर आकाश की तरह तथा राज्य से भ्रष्ट राजा की तरह हो रहा है॥४७॥

विद्येव च विना बुद्धिं क्रियेवाचारवर्जिता ।
धर्मश्चैव दयाहीनो लोकोऽयं मुनिना विना ॥ ४८ ॥

उस मुनि के बिना आज यह संसार, बुद्धि के बिना विद्या की तरह, आचार के बिना क्रिया की तरह एवं दयाहीन धर्म की तरह हो रहा है ॥४८॥

सेनापतिं विना सेना सारथिं च विना रथः ।
पत्नीव च विना पत्या लोकोऽयं मुनिना विना ।। ४६ ।।

उस मुनि के बिना यह संसार, सेनापति के बिना सेना की तरह, सारथी के बिना रथ की तरह, पति के बिना पत्नी की तरह हो रहा है ।। ४६ ।।

निशापतिं विना रात्री राज्यं भूपतिना विना ।
न शोभते यथा चैते तथा लोकोऽपि तं विना ।। ५० ।।

चन्द्रमा के बिना रात्रि, राजा के बिना राज्य—जिस प्रकार ये सब शोभा नहीं पाते हैं उसी प्रकार मुनि के बिना यह संसार शोभा नहीं पा रहा है ।। ५० ।।

अर्हन्नपि कृतार्थोऽपि जगद्दोषान् गुरोर्गुणान् ।
बहुशो वर्णयामास कृतज्ञः सः गुरुं प्रति ।। ५१ ।।

वह मुनि अर्हंत और कृतार्थ होने पर भी जगत् का दोष और गुरु के गुण का वर्णन अनेक बार किया । क्योंकि वह गुरु के प्रति कृतज्ञ था ।। ५१ ।।

ये च तत्र ह्यतत्त्वज्ञा रुरुदुस्ते हि भिक्षवः ।
नाशशीलं जगद्वीक्ष्य तज्ज्ञा धैर्यं न तत्यजुः ।। ५२ ।।

वहाँ पर जो अतत्त्वज्ञ थे वे भिक्षु रो रहे थे किन्तु जो तत्त्वज्ञ थे, वे जगत् को नाशवान समझकर, धैर्य नहीं छोड़े ।। ५२ ।।

श्रुतोदन्ता विपन्ना हि मल्लास्तत्र समाययुः ।
भेका इव फणिग्रस्ता विलेपुर्विस्वरं भृशम् ।। ५३ ।।

( बुद्ध-निर्वाण ) वृत्तान्त सुनकर मल्ल लोग दुःखी होते हुए वहाँ आये और साँप से पकड़े गये भेक ( मेंढक ) की तरह जोर-जोर से अत्यन्त विलाप करने लगे ।। ५३ ।।

गतप्राणं मुनिं दृष्ट्वा यथा सूर्यं गतप्रभम् ।
मोहध्वान्ते निमग्नास्ते भक्त्या संरुरुदुर्बहु ।। ५४ ।।

प्रभारहित सूर्य की तरह, प्राणरहित मुनि को देख कर, मोहरूप मूर्च्छा में डूबते हुए, भक्ति के कारण वे बारम्बार रुदन करने लगे ।। ५४ ।।

ये हि धर्मगुरोर्निर्वाणादासञ्छोकसंकुलाः ।
तेषु धर्मरतश्चैको धीरश्चाह विदन्निदम् ॥ ५५ ॥

धर्मगुरु के निर्वाण से जो शोकाकुल हो रहे थे, उनमें एक धर्मपरायण धीर मल्ल ऐसा जानता हुआ बोला—॥ ५५ ॥

सुप्तान प्रबोधयामास लोकान् यः स जगद्गुरुः ।
पश्चिमाशामिवादित्यो मृत्युशय्यां समाश्रितः ॥ ५६ ॥

"जिन जगद्गुरु ने सोते हुए लोगों को जगाया वे पश्चिम दिशा में अस्त होते हुए सूर्य की भाँति मृत्युशय्या पर पड़े हैं ॥ ५६ ॥

तिग्मैर्ज्ञानांशुभिर्येन गाढाज्ञानतमोऽनिशम् ।
नाशितं बुद्धसूर्येण सोऽसावस्तं जगाम हा ॥ ५७ ॥

हा ! जिन्होंने तीक्ष्ण ज्ञानरूप किरण से अज्ञानरूप घने अंधकार को निरन्तर नष्ट किया, वह बुद्धरूपी सूर्य अस्त हो रहा है ॥ ५७ ॥

दध्वंसे ज्ञानयानं हि लोकचक्षुर्निमेष च ।
तुत्रोट धर्मसेतुश्च सर्वमेव ननाश हा ॥ ५८ ॥

ज्ञानरूपी विमान नष्ट हो गया, लोक-चक्षु बन्द हो गये, धर्मसेतु टूट गया । हाय ! सब कुछ नष्ट हो गया ॥ ५८ ॥"

एवं हि रुरुदुः केचिद्विलेपुः केऽपि वै भृशम् ।
अन्ये ज्ञानादधुर्धैर्यं मौनिनश्च परे स्थिताः ॥ ५९ ॥

इस तरह कोई रोने लगे, कोई अत्यन्त विलाप करने लगे, कुछ ज्ञान से धैर्य धारण किये रहे तथा दूसरे मौन स्थित रहे ॥ ५९ ॥

विलपन्तस्ततो मल्लाः करैः शुण्डोपमैर्मुनेः ।
शिविकायां सुभद्रायां सौवर्ण्यां निदधुः शवम् ॥ ६० ॥

तब विलाप करते हुए वे मल्ल सूँड़ के समान भुजाओं से मुनि का शव स्वर्णमय सुन्दर शिविका में रखे ॥ ६० ॥

पुष्पैर्माल्यैश्च गन्धैश्च विविधैर्भक्तिमिश्रितैः ।
आनर्चुर्विधिना सर्वे जगृहुः शिविकां ततः ॥ ६१ ॥

और विविध फूल-माला सुगंधि से भक्तिपूर्वक विधिवत् पूजा किये। तब उन सबोंने शिविका उठाई ॥ ६१ ॥

सुकुमार्यः कुमार्यश्च रणदाभरणैः करैः।
तडित्प्रभं वितानं वै शिविकोपरि संदधुः ॥ ६२ ॥

सुकुमार कुमारियाँ भूषण से शब्दायमान हाथों से, विद्युत् के समान चमकदार चँदोवा को शिविका के ऊपर धारण किये ॥ ६२ ॥

छत्रं जग्राह वै कश्चित्सितैर्माल्यैरलं कृतम्।
चामराणि च शुभ्राणि केचिद्धैमानि जग्रहुः ॥ ६३ ॥

किसी ने सफेद माला से सुसज्जित छत्र धारण किया तथा किसी ने स्वर्ण के डंडा वाले सफेद चँवर डुलाये ॥ ६३ ॥

मल्लाश्च शनकैर्निन्युः स्कन्धाँस्तां शिविकां शुभाम्।
दिवि दुन्दुभयो नेदुः प्रावृट्काले घना इव ॥ ६४ ॥

मल्लों ने उस सुन्दर शिविका को अपने कन्धों पर उठाया। उस समय आकाश में दुंदुभी बजने लगी मानो वर्षा काल में मेघ गरज रहे हों ॥ ६४ ॥

निपेतुः सुरगङ्गाया हैमानि कमलानि वै।
गजानां केलिमत्तानां विकीर्णानि करैरिव ॥ ६५ ॥

आकाश से देवगंगा के सुवर्णमय कमल के फूलों की वर्षा हुई मानो जलक्रीड़ा में मत्त देवगजों के सूँड़ों से विक्षिप्त होकर गिरे हों ॥ ६५ ॥

दिवो देवाश्च सिद्धाश्च नन्दनोद्यानसम्भवैः।
कुसुमैः पारिजाताद्यैस्तत्यजुः सुमनोऽञ्जलीन् ॥ ६६ ॥

स्वर्ग से देवताओं ने एवं सिद्धों ने नन्दन उद्यान में होने वाले पारिजात आदि पुष्पों से पुष्पांजलि अर्पण की ॥ ६६ ॥

गन्धर्वाणां च देवानां रमण्यो यानसंस्थिताः।
मृत्युगीतं जगुर्मन्दमश्रुसिक्तस्तनस्रजः ॥ ६७ ॥

गन्धर्वों और देवों की रमणियाँ विमान पर बैठी हुई अश्रु से अपने स्तनों पर की मालाओं को भिगोती हुई, मन्द-मन्द मृत्यु-गीत गा रही थीं ॥ ६७ ॥

उच्छ्रितैः केतुभिः शुभ्रैः सितैर्माल्यैरलंकृताम् ।
वहन्तः शिविकां मल्लाः शनैर्जग्मुः शिवाध्वना ॥ ६८ ॥

शुभ्र एवं उन्नत फहराती हुई पताकाओं से तथा शुक्ल मालाओं से सुशोभित उस शिविका को कन्धों पर लेकर, मल्ल धीरे-धीरे पवित्र मार्ग से चले ॥ ६८ ॥

गायन्तः करुणं लोका मुनेर्दिव्यस्तवान् मुहुः ।
श्रद्धया प्रणमन्तश्च मध्यग्रामेण संययुः ॥ ६९ ॥

लोग बारम्बार करुणापूर्वक मुनि के दिव्य स्तोत्रों का पाठ कर रहे थे तथा श्रद्धा से प्रणाम कर रहे थे। इस तरह शव, गाँव के मध्य मार्ग से ले चले ॥ ६९ ॥

नागद्वारेण निर्गम्य ते हिरण्यवतीं नदीम् ।
तीर्त्वा मुकुटचैत्यस्य ह्यधश्चक्रुश्चितां शुभाम् ॥ ७० ॥

नाग द्वार से निकलकर वे लोग हिरण्यवती नदी को पार किये तथा मुकुट चैत्य के नीचे सुन्दर चिता रचे ॥ ७० ॥

चन्दनागुरुभिर्दिव्यै रचितायां च वल्कलैः ।
तस्यां ते विदधुः कायं मुनेर्गन्धादिवासितम् ॥ ७१ ॥

दिव्य चन्दन, अगुरु तथा वल्कल आदि से रची गई। उस चिता पर गन्धादिसुवासित मुनि का शरीर, मल्लों ने रखा ॥ ७१ ॥

ततः प्रज्वालिते दीपे त्रिःकृत्वो योजितेऽपि च ।
न जज्वाल चिता सा हि मन्त्रेणावेष्टिता इव ॥ ७२ ॥

तब दीपक जलाकर तीन बार चिता में लगाने पर भी वह चिता नहीं जली, मानों मंत्र से आवेष्टित ( रोकी गई ) हो ॥ ७२ ॥

काश्यपस्यायतो मार्गे शिष्यस्यालोकनार्थिनः ।
भावनातो निरुद्धा सा न जज्वाल चिता तदा ॥ ७३ ॥

दर्शनार्थी मुनि का शिष्य काश्यप मार्ग में आ रहा था। उसकी भावना से प्रतिबन्धित वह चिता उस समय नहीं जली ॥ ७३ ॥

धावँश्च काश्यपो म्लानो द्रुतमेत्य ननाम सः ।
पस्पर्श च गुरोः पादौ स्वयं जज्वाल सा ततः ॥ ७४ ॥

दीन-हीन काश्यप दौड़ता हुआ आया और (उसने) शीघ्रता से मुनि को प्रणाम किया। तब तत्काल वह चिता स्वयं जल उठी ॥ ७४ ॥

ददाहाग्निस्तु मांसादीन् पापं यान् दग्धुमक्षमम्।
मुनेरस्थीनि दग्धुं तु न शशाक हुताशनः ॥ ७५ ॥

अग्नि ने मुनि के मांस, चर्म, लोम आदि को जलाया जिनको पाप नहीं जला सका था। किन्तु मुनि की हड्डी को वह अग्नि न जला सकी ॥ ७५ ॥

क्षालयित्वा ततोऽस्थीनि तानि कुम्भे च काञ्चने।
निधाय स्थापयामासुर्मल्लाः स्वनगरे वरे ॥ ७६ ॥

तब मल्लों ने उन हड्डियों को धोकर स्वर्ण के कलश में रखकर अपने सुन्दर नगर में स्थापित किया ॥ ७६ ॥

घटेऽत्रास्ति स धातुर्वै यो न प्लुष्टश्चिताग्निना।
यथा हि ब्रह्मणो धातुर्न नष्टः प्रलयाग्निना ॥ ७७ ॥

इस घट में वह धातु है जिसको चिता की अग्नि नहीं जला सकी जैसे ब्रह्मा की धातु को प्रलयाग्नि भी नहीं जला सकी थी ॥ ७७ ॥

अमूल्यश्च शिवश्चैव संसारं पवितुं क्षमः।
स्थाप्यतेऽत्र मुनेर्भक्त्या जगच्छान्ति क्रियादिति॥ ७८ ॥

यह धातु मंगलमय एवं अमूल्य है, संसार को पवित्र करने में समर्थ है। मुनि की भक्ति से (इसे) यहाँ स्थापित करता हूँ। (यह) विश्व को शान्ति प्रदान करेगी ॥ ७८ ॥

कामः क्रोधश्च येनात्र भवश्चापि जितो दृढः।
मुनेस्तस्य शिवो धातुरयं विश्वं पविष्यति ॥ ७९ ॥

जिन्होंने काम को, क्रोध को तथा दृढ़ संसार को भी जीता है, उस मुनि की यह कल्याणमयी धातु, विश्व को पवित्र करेगी ॥ ७९ ॥

अहो कालस्य नैष्ठुर्यं न जहौ मुनिपुङ्गवम्।
यस्य धर्मेण कीर्त्या च व्याप्तं सर्वं चराचरम् ॥ ८० ॥

अहो! काल कितना निठुर है जिसने मुनिश्रेष्ठ को भी नहीं छोड़ा; जिस मुनि के धर्म और कीर्ति से चराचर विश्व व्याप्त हो गया है ॥ ८० ॥

यस्य सूर्यसमा दीप्तिर्येन लोकः प्रकाशितः ।
पावकोऽपि मुनेस्तस्य चास्थिमात्रं जहौ वपुः ॥ ८१ ॥

सूर्य के समान जिसका तेज था, जिसने संसार को आलोकमय कर दिया, उस मुनि के शरीर को अग्नि ने भी अस्थिमात्र अवशेष छोड़ा ॥ ८१ ॥

भवाब्धिः शोषितो येन दग्धं दोषमहावनम् ।
तथापि तस्य गात्रं हि वह्निना भस्मसात्कृतम् ॥ ८२ ॥

जिसने संसार सागर को सोख लिया, दोषरूपी महावन को जला दिया तो भी उस मुनि के शरीर को अग्नि ने भस्मसात् कर दिया ॥ ८२ ॥

मल्ला जिग्यू रणे शत्रून् नापुर्दैन्यं कदाचन ।
विशोकान् स्वजनाँश्चक्रुस्तथापि रुरुदुर्हि ते ॥ ८३ ॥

जिन मल्लों ने रण में शत्रुओं को जीता, कभी दीनता को प्राप्त नहीं हुए तथा स्वजनों को शोकरहित किया, फिर भी वे आज इस तरह रो रहे थे ।८३।

शुचार्दितास्ते बलिनोऽपि दुर्बलाः-
पुरं प्रविष्टा इव शून्यकाननम् ।
ततोऽस्थिपूजाभवनं विनिर्ममु-
र्भुवि स्थितो हंस इवाब्जजन्मनः ॥ ८४ ॥

इति श्रीरामचन्द्रदासकृते उत्तरबुद्धचरितमहाकाव्ये
"निर्वाणप्रशंसा" नाम सप्तविंशः सर्गः

वे मल्ल यद्यपि बलवान थे किन्तु शोकाक्रान्त होने से दुर्बल हो रहे थे । तब ( उन लोगों ने ) मुनि की अस्थि का पूजाभवन बनवाया मानो ब्रह्मा का हंस स्वर्ग से पृथ्वी पर आ गया हो ॥ ८४ ॥

यह श्रीरामचन्द्रदासकृत उत्तरबुद्धचरित महाकाव्य में
"निर्वाण-प्रशंसा" नामक सत्ताईसवाँ सर्ग
समाप्त हुआ ।

---

# अथ अष्टाविंशः सर्गः

## धातुविभाजनम्

### धातु-विभाजन

मलैरर्चितधातुं तं नेतुं कालान्तरे क्रमात् ।
दूतास्तत्राययू राज्ञां सप्तानां प्रतिवेशिनाम् ॥ १ ॥

तब कुछ काल के बाद मल्लों से पूजित, उस धातु को लेने के लिये, पड़ोसी सात राजाओं के दूत क्रमशः वहाँ आये ॥ १ ॥

धातौ श्रद्धातिरेकाद्धि मल्लाश्च बलगौरवात् ।
तद्दानापेक्षया तैस्तु युद्धं श्रेयस्करं विदुः ॥ २ ॥

धातु में अत्यन्त श्रद्धा होने के कारण तथा अपने बल के गौरव से मल्लों ने धातु देने की अपेक्षा उनके साथ युद्ध करना श्रेयस्कर समझा ॥ २ ॥

इति दूतैः समाकर्ण्य ते नृपाः सप्त कोपतः ।
ऊर्मिभिरिव सेनाभिः साकं तत्र समाययुः ॥ ३ ॥

तब दूतों के मुख से इस तरह की बात सुनकर, वे सात राजा क्रोध करके समुद्र की लहर की तरह, सेनाओं के साथ वहाँ आये ॥ ३ ॥

ह्रेषाभिः सैन्यवाहानां बृंहितैर्दन्तिनां तथा ।
भीता बहिः स्थिताः पौराः सत्वरं विविशुः पुरम् ॥ ४ ॥

सेना के अश्वों के हिनहिनाहट से और हाथियों के चीत्कार से डरकर, पुरवासी बाहर से शीघ्र नगर में प्रविष्ट हो गये ॥ ४ ॥

बहिः कुशपुरात्तस्मान्निवेश्य शिबिरं दृढम् ।
मल्लानाजुहवुः क्रुद्धा नृपा युद्धाय सप्त ते ॥ ५ ॥

उन सात राजाओं ने कुशपुर के बाहर, शिविर में, सेनाओं का दृढ़ शिविर बनाकर, क्रोध के कारण मल्लों को युद्ध के लिये ललकारा ॥ ५ ॥

तथा भयाकुलस्त्रीव सा पुरी द्वारनेत्रयोः ।
शीघ्रं कपाटवर्त्मानौ संपिधाय शुशोच ह ॥ ६ ॥

तब भय से व्याकुल स्त्री की तरह वह पुरी नेत्ररूपी द्वारों को पलकरूपी कपाटों से जल्दी बन्द करके शोक करने लगी ॥ ६ ॥

ग्रहाणामिव सप्तानां राज्ञामेकत्र संक्रमात् ।
उपद्रुता धरा वेगाच्चुक्षुभे साद्रिसागरा ॥ ७ ॥

सात ग्रहों की तरह उन सात राजाओं के एकत्र होने से पृथ्वी उपद्रवयुक्त होकर, समुद्र-पर्वत सहित बड़े वेग से काँपने लगी ॥ ७ ॥

हस्त्यश्वरथपत्तीनां सञ्चारात्तु समुत्थितैः ।
रजोभिर्भास्करे लुप्ते दुर्दिनं समजायत ॥ ८ ॥

हाथी, घोड़े, रथ और पदाति सैनिकों के संचार से उठी हुई धूलि से सूर्य ढक जाने के कारण दुर्दिन हो गया ॥ ८ ॥

रुरुधुर्नगरं भूपा वाहिनीभिः समन्ततः ।
समुद्रा लोककल्लोलैर्वसुधां प्रलये यथा ॥ ६ ॥

राजाओं ने सेनाओं से नगर को चारों ओर से घेर लिया जैसे प्रलय काल में समुद्र, चंचल तरंगों से पृथ्वी को घेर लेता है ॥ ६ ॥

धृतधैर्या भयं त्यक्त्वा प्राकारे संगता द्रुतम् ।
पौराः शत्रुषु तीक्ष्णानि शस्त्राण्यस्त्राणि चिक्षिपुः ॥ १० ॥

पुरवासी धैर्य धारण कर एवं भय त्याग कर संगठित हुए तथा प्राकार ( परकोट ) के ऊपर चढ़कर शत्रुओं पर तीक्ष्ण अस्त्र-शस्त्र छोड़ने लगे ॥१०॥

जगर्जुः सिंहविक्रान्ताः कम्बून् दध्मुस्तथापरे ।
केचित्खड्गांश्च निष्कास्य संचक्रमुरितस्ततः ॥ ११ ॥

सिंह के समान पराक्रमी कोई कोई गरजने लगे, दूसरे शंख बजाने लगे, कोई तलवार खींचकर यहाँ वहाँ पैंतरा करने लगे ॥ ११ ॥

वीरपत्न्यः पतीन् वीरान् विजयाय समुत्सुकान् ।
माङ्गल्यैः कुङ्कुमैः पुष्पै रणगीतैरपूपुजन् ॥ १२ ॥

वीरों की पत्नियों ने विजय के लिये उत्सुक अपने वीर पतियों की मांगलिक कुमकुम, पुष्प और रणगीत से पूजा की ॥ १२ ॥

वीरान् पुत्रांश्च यात्रासु जङ्घालान् कम्पितैः करैः ।
मातरो वर्मभिश्चामैरुपासैङ्गैरनीनहन् ॥ १३ ॥

माताओं नेकांपते हाथों से युद्ध में पराक्रम दिखाने वाले अपने वीर पुत्रों को कवच, ढाल एवं तरकस आदि से सजाया ॥ १३ ॥

मृगाद्यः कातराः काश्चित्स्वधवानां करे स्थितान् ।
चापान धृत्वा च निम्नास्या न तस्थुर्न ययुः पुनः ॥ १४ ॥

कुछ कातर मृगनयनी अपने पतियों के हाथ में स्थित धनुष को पकड़कर नीचे मुख करके न जा सकीं ( और ) न ठहर सकीं ॥ १४ ॥

मल्लान् युद्धाय सन्नद्धान् सर्पानिव विनिर्गतान् ।
दृष्ट्वा भूपाश्च संक्रुद्धा निश्चिच्युस्ते महारणम ॥ १५ ॥

तब उन राजाओं ने मल्लों को युद्ध के लिये तैयार सर्प की तरह निकलते हुए देखकर, कुपित होकर, महायुद्ध का निश्चय किया ॥ १५ ॥

द्रोणो विप्रवरः कश्चित्करुणाकुलमानसः ।
दृष्ट्वा युद्धोन्मुखान् वीरान् सूनृतं स वचोऽब्रवीत् ॥ १६ ॥

तब करुणा से आकुल मन वाला कोई द्रोण नामक श्रेष्ठ ब्राह्मण युद्धोन्मुख वीरों को देखकर सुमधुर वचन बोला—॥ १६ ॥

बहिःस्थितानरीञ्जेतुं शस्त्रैः स्यात्सुलभं रणे ।
प्राकाराभ्यन्तरस्थाँस्तु न तथा संहतान्पुनः ॥ १७ ॥

बाहर स्थित शत्रुओं को शस्त्रों से जीतना सुलभ है किन्तु प्राकार (परकोट) के अन्दर स्थित ( शत्रु ) को जीतना सुलभ नहीं है, उस पर भी यदि संगठित हो तो ( और भी ) अत्यन्त दुर्लभ है ॥ १७ ॥

कदाचित्पुरमावृत्य जेया वाभ्यन्तरे ऽरयः ।
न धर्म्यं कदनं तद्धि पौराणां तु निरागसाम् ॥ १८ ॥

कदाचित् नगर को घेर कर भीतर ही शत्रुओं को जीता भी गया तो वह धार्मिक युद्ध नहीं कहलायेगा अपितु निरपराध पुरवासियों की हत्या कहलायेगी ॥ १८ ॥

बलदर्पात्प्रविश्यान्तो योत्स्यध्वेऽन्यायतो यदि ।
न्यायप्रियेषु वै तेषु न युष्मज्जयसम्भवः ॥ १९ ॥

बल के दर्प ( अहंकार ) से अन्दर प्रवेश कर अन्याय से यदि आपने युद्ध किया तो न्यायप्रिय लोगों पर आपकी विजय सम्भव नहीं ॥ १९ ॥

पुरप्रवेशमाकर्ण्य तुच्छोऽपि विक्रमिष्यति ।
वराकाः पादसंक्रान्ताः कीटाश्चापि दशन्त्यलम् ॥ २० ॥

नगर में प्रवेश सुनकर तुच्छ प्राणी भी पराक्रम दिखायेगा क्योंकि पैर से ठोकर खाकर छोटा कीड़ा भी अत्यन्त काटता है ॥ २० ॥

धार्मिका अपि संक्रुद्धा वृद्धास्तेजोबलान्विताः ।
जिग्युः कुशपुरे युद्धे पुरा भूपं करन्धमम् ॥ २१ ॥

वृद्ध धार्मिक लोगों ने भी क्रुद्ध होकर पूर्वकाल में कुशपुर के युद्ध में करन्धम राजा को जीता था ॥ २१ ॥

यशोऽर्थं विषयार्थं वा जिता यैर्निखिला धरा ।
तेऽपि भूपाः करालेन कालेन कवलीकृताः ॥ २२ ॥

जिन्होंने विषय अथवा यश के लिये सारी पृथ्वी को जीता था, वे राजा भी कराल काल के कवल ( कौर, ग्रास ) हो गये ॥ २२ ॥

तस्माद्धर्मार्थकामानां स्वरूपं निपुणं धिया ।
विविच्य शान्त्युपायेन वर्तितव्यं सुखार्थिभिः ॥ २३ ॥

अतः धर्म, अर्थ एवं काम का स्वरूप निपुणतापूर्वक; बुद्धि से विवेचन कर शान्ति उपाय से, सुख चाहने वालों को बरतना चाहिये ॥ २३ ॥

पुनः प्रकोपमायाति जितानामायुधैर्मनः ।
शान्त्यायुधैर्जितानां तु शश्वच्छान्तिं निगच्छति ॥ २४ ॥

शस्त्र से जीते हुए मनुष्यों का मन पुनः प्रकुपित हो जाता है; किन्तु शान्ति के उपायों से जीते हुए मनुष्यों का मन, सदा के लिये शान्त हो जाता है २४

यं हि शाक्यमुनिं यूयं सम्मानयितुमिच्छथ ।
तस्यैव शासनाच्छान्तिमाश्रयध्वं प्रयत्नतः ॥ २५ ॥

आप लोग जिन शाक्यमुनि का सम्मान करना चाहते हैं; उन्हीं की आज्ञा से प्रयत्नपूर्वक शान्ति का आश्रय लें ॥ २५ ॥

निर्भीकेण द्विजेनैवमुक्ते स्पष्टे दयान्विते ।
नृपास्तेजस्विनः शान्ताः प्रत्यवोचँस्तरस्विनः ॥ २६ ॥

दयायुक्त उस ब्राह्मण के इस प्रकार निर्भीकतापूर्वक कहने पर, उन बलवान तेजस्वी राजाओं ने शान्त होकर इस प्रकार कहा—॥ २६ ॥

मैत्र्या तथ्यं हितं चोक्तं भवताऽतः शृणु मद्वचः ।
धर्मेऽस्माकं रतिश्चास्था बलेऽस्याजेर्हि कारणम् ॥ २७ ॥

"आपने मित्र की तरह यथार्थ एवं हितकर वचन कहा; अतः मेरी बात सुनिये—'हम लोगों का धर्म में प्रेम तथा बल में विश्वास है—यही युद्ध का कारण है ॥ २७ ॥

प्रायः कामाच्च लोभाच्च युध्यन्ते भुवि मानवाः ।
अस्माभिस्तु मुनेर्भक्त्या धृतं शस्त्रं स्वभावतः ॥ २८ ॥

बहुधा ( प्रायः ) भूमण्डल पर लोग इच्छा एवं लोभ से युद्ध करते हैं । हम लोगों ने तो मुनि में भक्ति होने के कारण स्वभाव से शस्त्र ग्रहण किया है ।

युयुधे सह कृष्णेन चेदिराजोऽभिमानतः ।
अभिमानो जितो येन तस्यार्चां किन्न कुर्महे ॥ २९ ॥

चेदिराज ने अभिमान से कृष्ण के साथ युद्ध किया था । जिस मुनि ने अभिमान को जीता, उसकी पूजा हम क्यों न करें ॥ २९ ॥

मृधे युयुधिरे कामात्कन्यार्थं वृष्णयोऽन्धकाः ।
येन कामो जितः सम्यक् तस्यार्चां किन्न कुर्महे ॥ ३० ॥

वृष्णि और अन्धक ने कन्या की कामना से संग्राम में युद्ध किया । जिस मुनि ने काम को अच्छी तरह जीता, उनकी पूजा हम क्यों न करें ॥ ३० ॥

ननाश रावणः सीतां गृहीत्वा कालरूपिणीम् ।
संत्यक्तः संग्रहो येन तस्यार्चां किन्न कुर्महे ॥ ३१ ॥

रावण, कालरूपिणी सीता को ग्रहण करने से नष्ट हुआ । जिस मुनि ने संग्रह का त्याग किया, उसकी पूजा हम क्यों न करें ॥ ३१ ॥

क्रोधाद्धि भार्गवो राज्ञां कुलं चिच्छेद मूलतः ।
येन क्रोधो जितः सम्यक् तस्यार्चां किन्न कुर्महे ॥ ३२ ॥

परशुराम ने क्रोध से राजाओं को समूल नष्ट किया । जिन मुनि ने क्रोध को सम्यक् प्रकार से जीता, उसकी पूजा हम क्यों न करें ? ॥ ३२ ॥

लोके बहुविधं युद्धं बभूवानुचितं मुहुः ।
वयं तु मुनिपूजार्थं किन्न युध्यामहे हितम् ॥ ३३ ॥

विश्व में बहुत प्रकार के, अनेक बार, अनुचित युद्ध हुए । हम लोग, मुनि की पूजा के लिये, यह हितकर युद्ध क्यों न करें ? ॥ ३३ ॥

मोहात्परस्परं नष्टौ संयुध्यैलिपकावुभौ ।
येन मोहो जितः सम्यक् तस्यार्चां किन्न कुर्महे ॥ ३४ ॥

ऐलि और एक, दोनों मोह से आपस में युद्ध करके नष्ट हो गये। जिन मुनि ने मोह को सम्यग् रूप से जीता, उनकी पूजा हम क्यों न करें ? ।। ३४ ।।

अयमस्मत्समुद्देशो दूतो भूत्वा द्रुतं व्रज।
विना युद्धेन सिद्धिः स्यात्सर्वथा त्वं तथा कुरु ॥ ३५ ॥

यह हम लोगों का उद्देश्य है। आप दूत बनकर शीघ्र जावें और बिना युद्ध के कार्य-सिद्धि हो, ऐसा प्रयत्न करें ॥ ३५ ॥

तीक्ष्णायुधा वयं युद्धे शक्ताश्चापि तवाग्रहात्।
सन्निरुद्धा गतावेगा मन्त्रमुग्धा इवाहयः ॥ ३६ ॥

हमारे पास तीक्ष्ण अस्त्र-शस्त्र हैं तथा हम युद्ध में समर्थ भी हैं, किन्तु आपके आग्रह से, हम लोगों का वेग उसी तरह रुक गया है जैसे मंत्रमुग्ध सर्प रुक जाता है।" ॥ ३६ ॥

ततोऽसौ ब्राह्मणो राज्ञामाज्ञामादाय सत्वरम्।
प्रविश्य नगरं मल्लान् यथाकालं व्यजिज्ञपत् ॥ ३७ ॥

तब वह ब्राह्मण, राजाओं की आज्ञा लेकर, शीघ्र नगर में गया और (उसने) यथासमय मल्लों को बताया ॥ ३७ ॥

सन्नद्धा वर्मिणो वीरास्तीक्ष्णबाणा युयुत्सवः।
पुरोद्वारेषु युष्माकं गर्जन्ति हरिविक्रमाः ॥ ३८ ॥

"तीक्ष्ण बाण वाले कवचधारी वीर, युद्ध की इच्छा से तैयार होकर आप लोगों के नगर के द्वार पर, सिंह के समान गरज रहे हैं ॥ ३८ ॥

अमोघं स्वायुधं वीक्ष्य चाजेयं स्वबलं तथा।
मुनिधर्ममनुस्मृत्य बिभ्यत्येते न वै रणात् ॥ ३९ ॥

अपना अमोघ आयुध तथा अजेय बल देखकर भी मुनि के धर्म का स्मरण करके डरते हैं (किन्तु) रण से नहीं डरते हैं ॥ ३९ ॥

अहङ्कारान्न राज्याय मुनिभक्त्यैव केवलम्।
आगतानां वचोऽस्माकं मान्यं चेति वदन्ति ते ॥ ४० ॥

'अहंकार से नहीं, और न राज्य के लिये (अपितु) केवल मुनि की भक्ति से हम सब (यहाँ) आये हैं हम लोगों का वचन मानना चाहिये-' ऐसा वे कहते हैं।

यथा वः स तथाऽस्माकं गुरुर्विश्वगुरुर्मुनिः।
तस्यास्थ्नामेव पूजार्थं वयमत्र समागताः ॥ ४१ ॥

वह मुनि, जिस तरह आपके गुरु हैं, उसी तरह हमारे भी गुरु हैं। क्योंकि वे विश्व-गुरु ( संसार के गुरु हैं ) हैं उनकी अस्थि की पूजा के लिये हम यहाँ आये हैं ॥ ४१ ॥

यथाघं धर्मकार्पण्यं तथाघं नान्यथा भुवि ।
कार्पण्यवचनं पापं पापं धर्मस्य घातनम् ॥ ४२ ॥

पृथ्वी पर धर्म की कृपणता से जितना पाप लगता है, उतना पाप दूसरी तरह से नहीं लगता है । कृपण वचन बोलना पाप है, तथा धर्म का घात करना पाप है ॥ ४२ ॥

दातुं नेच्छथ चेद्धातुं निर्गम्य नगराद्बहिः ।
द्वारस्थानतिथीन् वीरान् प्रीणीध्वं वीरकर्मभिः ॥ ४३ ॥

यदि धातु नहीं देना चाहते हैं तो ( नगर से बाहर निकल कर ) द्वार पर आकर स्थित वीर अतिथियों का वीर कर्म से स्वागत करें ॥ ४३ ॥

राज्ञामेष तु संदेशो धैर्यसौहार्दसंयुतः ।
उक्तो मया समाप्यग्रे सद्वचः श्रृणुताधुना ॥ ४४ ॥

राजाओं का यह धीरता एवं मित्रता से मिश्रित सन्देश है जो मैंने सुनाया । अब इसके आगे मेरा भी कुछ सद्वचन सुनें—॥ ४४ ॥

न सुखं न च वै धर्मो जायते कलहात्क्वचित् ।
उपदेशं क्षमायास्तु मुनिश्चापि ददौ सदा ॥ ४५ ॥

कलह से न तो सुख मिलता है और न धर्म ही होता है। मुनि ने भी सदा क्षमा का ही उपदेश दिया है ॥ ४५ ॥

लोके कामाय वाऽर्थाय युध्यन्ते भुवि मानवाः ।
ये तु धर्माश्रिताश्चार्या द्वौ विरुद्धौ तु तन्मते ॥ ४६ ॥

संसार में मनुष्य प्रायः काम के लिये अथवा अर्थ के लिये युद्ध करते हैं। जिन आर्यों ने धर्म का आश्रय लिया है, उनके मत से ये दोनों विपरीत हैं ४६

लब्धशान्तिः परस्मै च गौतमः शान्तिमादिशत् ।
दयालोस्तस्य पूजार्थं कदनं मा नृणां कृथाः ॥ ४७ ॥

जिन मुनि ने (स्वयं) शान्ति प्राप्त की तया दूसरों को ( भी ) शान्ति प्रदान की, उन दयालु मुनि की पूजा के निमित्त व्यर्थ का कदन ( हिंसा ) न करें ॥

यूयं धर्मयशोभाजो धातुदानाद्भविष्यथ ।
ते मित्राणि भविष्यन्ति शर्मं चैष्यन्ति मानवाः ॥ ४८ ॥

उन्हें धातु प्रदान करने से आप लोग धर्म और यश के भागी होंगे । सब राजा आपके मित्र बन जावेंगे तथा जनता को शान्ति मिलेगी ॥ ४८ ॥

धर्मच्युता हि धर्मेण योजनीयाः प्रयत्नतः ।
एवं कुर्वन्ति ये धीरास्ते धर्मस्य हि भाजनम् ॥ ४९ ॥

धर्म से विमुख प्राणियों को प्रयत्न करके धर्म से जोड़ना चाहिये । जो धीर पुरुष ऐसा करते हैं वे धर्म के भाजन होते हैं ॥ ४९ ॥

मुनिनोक्तं हि सद्धर्माज्ज्यायः किंचिन्न विद्यते ।
सुलभा धनदातारो धर्मदाता सुदुर्लभः ॥ ५० ॥

मुनि का कहा हुआ सद्धर्म से श्रेष्ठ कोई नहीं है । धनदाता तो सुलभ हैं ( किन्तु ) धर्मदाता अत्यन्त दुर्लभ है ।" ॥ ५० ॥

द्रोणाचार्येण तुल्यस्य सतो द्रोणस्य तद्वचः ।
धर्म्यं यशस्यमाकर्ण्य ते तं होचुस्ततः परम् ॥ ५१ ॥

द्रोणाचार्य के समान विद्वान उस द्रोण ब्राह्मण का धर्मकारक और यश कारक वचन सुनने के बाद, वे मल्ल उससे बोले—॥ ५१ ॥

सन्मित्रस्येव ते ब्रह्मन् ! वचो विप्रगुणान्वितम् ।
व्यध्वगानिव दुर्वाहानस्मान्निन्यिथ सत्पथम् ॥ ५२ ॥

"हे ब्राह्मण ! सन्मित्र के समान ब्राह्मण गुण से सम्पन्न आपका वचन है आप कुमार्ग में जाने वाले दुष्ट घोड़ों की तरह हम सबको, सत्पथ (सुन्दर मार्ग) पर ले आये हैं ॥ ५२ ॥

यथोक्तं भवताऽस्माभिरनुष्ठेयं तथा खलु ।
मित्रवाक्यमनादृत्य विपद्भिरभिभयते ॥ ५३ ॥

आपने जैसा कहा, निश्चित ही हम सब वैसा ही करेंगे । क्योंकि मित्र-वचन का अनादर करने वाले विपत्तियों से घिर जाते हैं ॥ ५३ ॥

अष्टधा तं विभज्यातो धातुं मल्ला मुनेः शुभम् ।
एकैकशो ददुः सप्त ह्येकमाददिरे स्वयम् ॥ ५४ ॥

तत्पश्चात् मल्लों ने मुनि की उस मंगलमय धातु के आठ भाग करके, एक

एक करके सात भाग तो सात राजाओं दो दे दिये एवं आठवाँ भाग स्वयं ही रख लिया ॥ ५४ ॥

धातुमादाय संहृष्टाः स्वस्वदेशं समागताः ।
तत्र तत्र पुरे स्तूपं धात्वर्थं निर्ममुर्नृपाः ॥ ५५ ॥

धातु लेकर प्रसन्न हुए राजा अपने अपने देश लौट गये । वहाँ ( अपने ) नगर में उस धातु के लिये ( उन राजाओं ने स्तूप ) बनवाये ॥ ५५ ॥

स्तूपार्थं च निजे देशे घटं द्रोणः समाददे ।
पिसलाश्च मुनेर्भक्त्या निन्युर्भस्मैव केवलम् ॥ ५६ ॥

अपने देश में स्तूप बनाने के लिये द्रोण ने केवल घट ले लिया, तथा पिसल, मुनि में भक्ति होने के कारण, बची हुई केवल भस्म ही ले गये ॥ ५६ ॥

स्तूपानि धातुगर्भाणि चाष्टावासन् महीतले ।
नवमं घटगर्भं च दशमं भस्मनोऽभवत् ॥ ५७ ॥

इस तरह पृथ्वी पर धातुगर्भित आठ, घटगर्भित एक-नवाँ, भस्मगर्भित एक-दसवाँ ( ये ) स्तूप बने ॥ ५७ ॥

राजानः सह सामन्तैर्भूदेवाः सह बान्धवैः ।
प्रजाश्च केतुभी रम्याञ्छुभ्रान्स्तूपानपूपुजन् ॥ ५८ ॥

केतु से मनोहर एवं उज्ज्वल स्तूपों को, सामन्तों सहित सब राजा, बन्धु-बान्धवों सहित ब्राह्मण एवं प्रजाजन पूजने लगे ॥ ५८ ॥

जज्वलुः सततं दीपा नेदुर्घण्टा अहर्निशम् ।
स्तोत्रैरुपासनां चक्रुर्नृपा माल्यैः सुगन्धिभिः ॥ ५९ ॥

वहाँ (स्तूप) पर अखण्ड ज्योति जलने लगी । दिन-रात घण्टा बजने लगे । राजा गण, गंध पुष्प माला आदि से पूजा करके स्तोत्र पठन करने लगे ॥५९॥

ततो गच्छत्सु कालेषु पञ्चशैलाङ्किते पुरे ।
आजग्मुरेकदा सार्कं तत्र पञ्चशतार्हताः ॥ ६० ॥

तब कुछ काल बीतने पर पाँच पर्वतों के मध्य स्थित नगर में एक दिन पाँच सौ बौद्ध भिक्षु एक साथ आये ॥ ६० ॥

धर्मं भृशं दृढीकर्त्तुमुपदेशान्मुनेस्ततः ।
पर्वतोपरि संगम्य संचिक्युस्ते समाहिताः ॥ ६१ ॥

तब धर्म को स्थायी बनाने के उद्देश्य से सब भिक्षुओं ने पर्वत के उपर सम्मिलित होकर, बड़ी सावधानी से मुनि के उपदेशों का संग्रह किया ॥ ६१ ॥

आनन्द एव शुश्राव सर्वान् धर्मान्मुनेर्मुखात् ।
इति निश्चित्य ते सर्वे तं पुनर्वक्तुमादिशन् ॥ ६२ ॥

'आनन्द ने ही साक्षात् मुनि के मुख से सब धर्मों का श्रवण किया है'—इस प्रकार निश्चय करके, सब ने उस ( आनन्द ) को ( वे सब उपदेश ) दुहराने के लिये ( पुनः कहने के लिये ) कहा ॥ ६२ ॥

उपविश्य ततस्तत्र तेन सर्वं यथाश्रुतम् ।
प्रसङ्गः समयः स्थानं व्याख्यातं च यथाक्रमम् ॥ ६३ ॥

तब उस आनन्द ने जिस प्रकार ( भगवान् बुद्ध से ) सुना था—ज्यों का त्यों क्रमशः प्रसंग, समय तथा स्थान आदि सबका, वहाँ बैठकर प्रवचन किया ॥

धर्मशास्त्रं मुनेश्चैव महद्भिः सह निश्चितम् ।
तस्य ज्ञानेन शोकान्तं याता यास्यन्ति वै जनाः ॥ ६४ ॥

इस तरह आनन्द ने अर्हतों ( बौद्धभिक्षुओं ) के साथ मिलकर मुनि का धर्म शास्त्र निश्चित किया । उसके ज्ञान से लोग शोक ( रूपी सागर ) के पार हो गये, हो रहे हैं ( तथा ) हो जावेंगे ॥ ६४ ॥

ततो धर्मप्रियोऽशोको वभूव प्रियदर्शनः ।
विशोकान् सज्जनान् दुष्टान् सशोकान् कृतवानसौ ॥ ६५ ॥

तब कालान्तर में धर्म-प्रिय प्रियदर्शन अशोक का जन्म हुआ, जिसने सज्जनों को शोकरहित तथा दुर्जनों को शोकसहित कर दिया ॥ ६५ ॥

स्तूपांश्चकार सर्वत्र मौर्यो जनहिताय सः ।
चण्डाशोकादतो धर्मराजोऽशोकोऽभवत्खलु ॥ ६६ ॥

उस मौर्य ( अशोक ) ने जनहित के लिये बहुत से स्तूप बनवाये । अतः वह चण्डाशोक से धर्मराज अशोक कहलाने लगा ॥ ६६ ॥

स्तूपेभ्यः सप्तसंख्येभ्यो धातूनादाय वै मुनेः ।
मौर्यवंशप्रदीपोऽसौ विभेजेऽनेकशो वशी ॥ ६७ ॥

मौर्य वंश के प्रदीप जितेन्द्रिय उस अशोक ने सात धातु गर्भित स्तूपों से मुनि की धातु लेकर अनेक विभाग किये ॥ ६७ ॥

अशीतिषु सहस्रेषु स्तूपेषु धवलेषु तान् ।
क्रमात्संस्थापयामास चैकस्मिन् दिवसे कृती ॥ ६८ ॥

कुशल अशोक ने विभाजित धातुओं को एक दिन के अन्दर अस्सी हजार स्तूपों में क्रमशः स्थापित किया ॥ ६८ ॥

आसीन्महात्मनः स्तूपो मुख्यो रामपुरेऽष्टमः ।
विश्वस्तै रक्षितो नागैर्नादातुमशकत्ततः ॥ ६९ ॥

इस रामपुर में महात्मा बुद्ध का आठवाँ मुख्य स्तूप था । विश्वासी नागों ( सर्पों ) के द्वारा उसकी रक्षा होती थी । अतः उसमें से ( कोई भी ) धातु नहीं ले सका ॥ ६९ ॥

सत्सु राज्योपभोगेषु चित्तविभ्रमहेतुषु ।
स लेभे चोत्तमं लाभं शुद्धचित्तो गृहे वसन् ॥ ७० ॥

चित्त के विभ्रम हेतु, राज्य के विविध सुखोपभोग होने पर भी, घर में रहते हुए, विशुद्ध चित्त अशोक ने उत्तम धर्मलाभ किया ॥ ७० ॥

एवं मुनिं तु यः कोऽपि चानर्चार्चेति चार्चिता ।
स लेभे लभते चापि लप्स्यते चोत्तमं फलम् ॥ ७१ ॥

इस प्रकार जिस किसी ने भी मुनि का पूजन किया, करता है ( तथा ) करेगा; वह अवश्य उत्तम फल ( क्रमशः ) पाया था, पाता है ( तथा ) पायेगा ॥ ७१ ॥

जीवितं च मुनिं नत्वा यत्फलं लेभिरे जनाः ।
तत्फलं धातुपूजार्तो लप्स्यन्ते नात्र संशयः ॥ ७२ ॥

जीवित मुनि को नमस्कार करके लोग जो फल पाते थे; वही फल ( मुनि की ) धातु की पूजा से पावेंगे—इसमें संशय नहीं है ॥ ७२ ॥

अतः परमधर्मस्य ज्ञातारं चाव्ययस्य वै ।
श्रद्धया परया बुद्धं भूमावर्चन्तु मानवाः ॥ ७३ ॥

अतः अव्यय तथा परम धर्म के ज्ञाता बुद्ध को परम श्रद्धा से मनुष्य पृथ्वी पर पूजें ॥ ७३ ॥

दीनाः समुद्धृता येन मार्गो धर्मस्य शोधितः ।
कृतज्ञाः किन्न चार्चन्तु बुद्धं लोकहिते रतम् ॥ ७४ ॥

जिसने दीनों का उद्धार किया, तथा धर्म का मार्ग शोधा—ऐसे लोक कल्याण में रत बुद्ध को, कृतज्ञ लोग क्यों न पूजें ? ॥ ७४ ॥

कोऽन्यो हि तादृशः पूज्यो येन जन्मजराकृतम् ।
स्वर्गाच्च पतनाद् :खं विश्वस्य परिलक्षितम् ।। ७५ ।।

जिसने विश्व के जन्म, वृद्धावस्था से जनित दुःख एवं स्वर्ग से पतन के दुःख को समझा--उस बुद्ध के समान दूसरा पूज्य, संसार में कौन है ? ।।७५।।

कोऽन्यो हि तादृशः पूज्यो येन मुक्तेन मोचिताः ।
पुनर्भवान्महादुःखात्प्राणिनः सततं भुवि ।। ७६ ।।

जिसने संसार में पुनर्जन्मरूप महान दुःख से स्वयं मुक्त होकर, निरन्तर अन्य प्राणियों को मुक्त किया—उस बुद्ध के समान पूज्य दूसरा कौन है ।।७६।।

पठनाच्छ्रवणात्तस्य चरितस्य महामुनेः ।
जनाः पुनर्भवाद् ुःखाद्विमोदयन्ति न संशयः ।। ७७ ।।

महामुनि के चरित्र का पठन एवं श्रवण से मनुष्य, पुनर्भवरूप दुःख से मुक्त होंगे—इसमें सन्देह नहीं ।। ७७ ।।

बुद्धानुरागादनुगम्य तस्य
शास्त्रं च लोकस्य हिताय शान्त्यै ।
काव्यं कृतं ज्ञापयितुं निजस्य
कलां न काव्यस्य च कोविदत्वम् ।। ७८ ।।

इति श्रीरामचन्द्रदास कृते उत्तरबुद्धचरितमहा-
काव्ये "धातुविभाजनम्" नाम
अष्टाविंशः सर्गः समाप्तः

बुद्ध के शास्त्र का अनुसरण करके बुद्ध में अनुराग के कारण, लोक के हित एवं शान्ति के लिये यह काव्य रचा गया है; न कि काव्य की कला अथवा पाण्डित्य बताने के लिये ।। ७८ ।।

यह श्रीरामचन्द्रदासकृत बुद्धचरितमहाकाव्य में
"धातुविभाजन" नामक अट्ठाईसवाँ
सर्ग समाप्त हुआ

---

# बुद्धचरित : शब्दानुक्रमणिका

अज—दशरथ के पिता
अशोक—राजा
अपलाप—सर्प
अंगुलीमाल—ब्राह्मण
अंधक—देश
अंगदक—पञ्चपर्वत के ग्रामीण
अर्णस्—जल
अलकावती—नगरी
अजातशत्रु—राजा
अभय—राजा
अनिरुद्ध—राजकुमार
अनाथपिण्ड—भिक्षु
अर्हन्—योग्य, त्रिकालमुक्त पुरुष
अश्वजित्—भिक्षु
अत्रिमुनि—दत्तात्रेय के पिता
अर्चिता—अर्च् ( लुट् )
आजुह्व—जुह् ( आङ् उपसर्ग )
आम्रपाली—वेश्या
आनन्द—प्रमुख-शिष्य
आटविक—वनमानुष
आधिगाथ—ग्रन्थविशेष
औरुबिल्व—उरुबिल्व की सन्तान
इन्द्र—देवराज
उत्तर—लिच्छवि जातिविशेष के राजा
उत्तरा—कौशाम्बीवासी
उवाप—वप् ( वपने ) लिट्
उपनन्द—राजकुमार
ऐलि—योद्धा राजा
कपिल—ब्राह्मण
कापिलेय—कपिलशास्त्रानुगामी, उपतिष्य
कपिलवस्तु—नगरी
करंधम—राजा
कल्माषदम्य—नगर
काश्यप—कश्यपगोत्रज
कात्यायन—कात्यायन ऋषि
कालक—वनवासी
कुलपुत्र—धनिक-पुत्र
कुब्जा—कौशाम्बीवासी
कुशपुर—नगर
कुम्भीर—वनवासी
कूटदत्त—वन
क्रूरकर्मा—वनवासी
क्रमिल—राजकुमार
क्रकच—आरी
क्लेश—अविद्या, अस्मिता, राग एवं द्वेष तथा अभिनिवेश
केन्य—ब्राह्मण
कृशाश्व—राजा
कौशाम्बी—नगर
कौरव—दुर्योधनादि
खर—यक्ष
गतिमान्—राजा
गय—काश्यपानुज
गाधिपुत्र—विश्वामित्र
गांधार—नगर
चतुर्विंशतितत्त्वम्—पञ्चमहाभूत, पञ्चतन्मात्र, दश इन्द्रियां, ३ अन्तःकरण, १ मूलप्रकृति

चण्ड—नाग
चेदिराज—शिशुपाल
चैत्य—बौद्धालय
चुन्द—राजा
चुक्षुभे—क्षुभ् ( लिट् )
जङ्गाली—वनवासी
जङ्गालान—लड़ाकू
जिगाय—जीता
जेत—राजा
ज्योतिष्क—पर्वत के ग्रामीण
तस्तार—तृ लिट्
तीर्थक—पंडे
तुत्रोट—त्रुट् ( भंजे ) लिट्
दण्ड—नाग
दध्वन्से—ध्वंस विनाशे
देवदत्त—राजा, बुद्धद्रोही
द्रोण—ब्राह्मण
धर्म्या—धर्ममय
धातु—अस्थि-चिताभस्म
नकुल—ग्रामीण
नदी—काश्यपानुज
नहुष—सूर्यवंशी राजा
नंद—राजकुमार
नागर—वनवासी
नागायन—यक्षराज
नाभाग—राजा
निर्ग्रन्थ—जातिविशेष
निकुंभ—पापिष्ठ राजा
निन्ये—णीञ् प्रापणे
निमेष—क्षण, पलक
निन्यत्—णीञ् प्रापणे
नेदुः—णद् अव्यक्तशब्दे
न्यग्रोध—द्वैतवादी राजा
नैरंजन—नदी
पक—राजा
पविष्यति—पूञ् पवने
पंचशिख—असुर एवं सुर
पंचशतार्हंता—५०० देव
पुष्कल—जातिविशेष
पुष्कर—राजा
पाषाण पर्वत—पर्वत
पाटलिपुत्र—पटना
पारायण—ब्राह्मण
पूर्णभद्र—नाग
प्रसेनजित्—राजा
प्रातिमोक्ष—बुद्धनिर्मित ग्रन्थ
प्रोत—पिरोया हुआ
पिंगल—नाग
पिशला—जाति
बुद्धाः—बोधप्राप्त मनुष्य
बुद्धं—बोधप्राप्त मनुष्य, गौतम
ब्रह्मायु—ब्राह्मण
भद्र—यक्ष
भद्रजित्—भिक्षु
भारद्वाज—ब्राह्मण
भार्गव—परशुराम
भार्गसौ—प्रान्त
भेषक—यक्ष
मर्कट—जलचर राक्षस
मल्लः—जातिविशेष
मार—कामदेव
मिथ्यादृष्टि—आत्मवाद
मौद्गलायन—मुद्गलगोत्रज
मेंठक—धनिकपुत्र
यशः—भिक्षु
यशोधरा—सिद्धार्थ-पत्नी

# दार्शनिक परिभाषायें

**आष्टाङ्गिक योग** :—सम्यक्दृष्टि, सम्यक् संकल्प, सम्यक् वाणी, सम्यक् कर्मान्त, सम्यक् आजीविका, सम्यक् व्यायाम, सम्यक् स्मृति और सम्यक् समाधि।

१. सम्यक् दृष्टि :—दिव्यदृष्टि, यथार्थानुभव, संशय-विपर्यय से रहित ज्ञान। ( तद्वति तत्प्रकारकं ज्ञानं )।

२. सम्यक् संकल्प :—सत्संकल्प, कामक्रोधादि का उद्भव जिस विचार में न हो।

३. सम्यक् वाणी :—मिथ्या, कटु, अहितकरादि, दोषरहित, सत्यप्रिय, हितकरादि गुणों से युक्त तथा सामयिक एवं परिमित वाणी।

४. सम्यक् कर्मान्त :—अहिंसा, अस्तेय, ब्रह्मचर्य, अपरिग्रह तथा तप।

५. सम्यक् आजीविका :—मद्यमांसादि, दूषित वस्तु का व्यापार तथा पर अहित से जीवन निर्वाह न करना। विशुद्ध स्वपुरुषार्थ से जीवन व्यतीत करना।

६. सम्यक् व्यायाम :—सत्प्रयत्न, जिन प्रयत्नों से काम क्रोधादि दोष क्षीण होकर विशुद्ध निर्मल विचार का उद्गम हो।

७. सम्यक् स्मृति :—यथार्थ स्मृति, पूर्वानुभव का निरन्तर जागरूक रहना। अमुक समय अमुक कर्म से सुख या दुःख हुआ था, उसका ज्ञान रखना।

८. सम्यक् समाधि :—चित्त की एकाग्रता। क्षिप्त, मूढ़, विक्षिप्त, निरुद्ध इन चार अवस्थाओं से आगे पाँचवीं चित्त की अवस्था, एकाग्रता।

**संयोजन** :—रूप-रसादि पाँच गुण तथा चक्ष्वादि पाँच ज्ञानेन्द्रियाँ, दस बन्धन हैं।

**अर्हन्** :—१५।३ त्रिकालमुक्त पुरुष ( बुद्ध ) सं०।

**क्लेश** :—१५।९ अविद्या, अस्मिता, राग, द्वेष, अभिनिवेश ये पाँच हैं। १५।११ अनित्य को नित्य, अशुचि को शुचि, दुःख को सुख तथा अनात्मा को आत्मा मानना **अविद्या** है।

द्रष्टा और दृश्य को एक मानना **अस्मिता** है। सुख भोग के बाद सुख भोगने की लालसा बनी रहना **राग** है। दुःख भोगने के बाद दुःख की अनुभूति शेष रहना **द्वेष** है। मृत्यु का भय होना **अभिनिवेश** है।

**मृगदाव** :—१५।१९ बौद्धालय, सारनाथ।

**मध्यम मार्ग** :—१५।४५ तप और भोग के बीच का मार्ग, अष्टाङ्ग योग।

**आर्यसत्य** :—१५।५६, ५८ दुःख, दुःख का नाश, दुःख का कारण, दुःख नाश का उपाय ये चार हैं। हेयं दुःखमनागतम्। द्रष्टृदृश्ययोः संयोगो हेतुः। तस्य हेतुरविद्या तदभावात्संयोगाभावो हानम्। विवेकख्यातिरविप्लवा हानोपायः।

**निरोध** :—१५।५२, ५३ व ५५ दुःख का नाश, हान, अविद्या का अभाव।

**अर्हता** :—१६।१८ बोध प्राप्ति, त्रिकालमुक्तता।

**उपादान** :—१६।६० जगत्-जन्म का मूल कारण।

**मिथ्यादृष्टि** :—१६।७७ आत्मा है, मरने के बाद आत्मा रहती है ऐसा विश्वास।

**सम्यग् दृष्टि** :—१६।७७ आष्टाङ्गिक मार्ग की व्याख्या में देखिये।

**आदेशक** :—१६।८९ निर्देशक जिसके निर्देशन में जीव या जगत् का जन्म होता है।

**वेदन** :—१६।९० चेतन, अनुभव करने वाला या अनुभव ( जैसे मादक द्रव्यों के परस्पर सम्मिश्रण से मादकता उत्पन्न होती है या पान, सुपारी, चूना, कत्था के सम्मिश्रण से लालिमा उत्पन्न होती है, उसी प्रकार शरीर, इन्द्रिय, बुद्धि आदि के संयोग से चेतना या वेदना उत्पन्न होती है। )

**षडक्ष** :—१६।९० श्रोत्र, त्वक्, चक्षु, जिह्वा, घ्राण, बुद्धि।

**षड्विषय** :—१६।९० शब्द, स्पर्श, रूप, रस, गन्ध, वेदन।

**भाव** :—१७।८ भवनशील ( उत्पन्न होनेवाले ) पदार्थ, चराचर विश्व।

**कारण** :—१७।८ तृष्णा, भोगेच्छा आदि दोष।

**मार्ग** :—१७।८ मुक्ति का साधन ( विवेक ख्याति )।

**चतुर्विंशति तत्त्व** :—१७।१२ पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ; पाँच महाभूत, पाँच तन्मात्रायें, तीन अन्तःकरण और एक मूल प्रकृति।

**कापिलेय मत** :—१७।१५ प्रकृतिपुरुषवाद, द्वैतवाद ( सांख्यशास्त्र )।

**बौद्ध मत** :—१७।१६ अनात्मवाद, शून्यवाद, विज्ञानवाद, क्षणिकवाद।

**चैत्य** :—१७।२६ बौद्धालय, मठ।

**आस्रव** :—१७।४३ कामास्रव, भवास्रव, दृष्ट्यास्रव, अविद्यास्रव, ये चार हैं। पुत्रेषणा—( पुत्र परिवारादि की इच्छा कामास्रव कहलाती है। लोकेषणा—यश, प्रताप, विजय, ऐश्वर्यादि की इच्छा भवास्रव है। वित्तेषणा—धन, सम्पत्ति, वैभव, बलादि की इच्छा दृष्ट्यास्रव है। ये तीनों कर्मज हैं। अज्ञान और मूढ़ता अविद्यास्रव है और यह स्वभावज है।

**ईशमत** :—१८।३० ईश्वरवाद, ईश्वर जगत् का कर्ता है। ऐसा सिद्धान्त।

**स्वभाववाद** :—१८।३० जगत् का कर्ता कोई नहीं है, स्वभाव से अपने आप जगत् बनता-मिटता है।

**काल** :—१८।४३ (कालवाद) काल से परे कुछ नहीं, काल से जगत् बनता-मिटता है। ऐसा मत।

**अकारण वाद** :—१८।५० जगत् बनाने या बनने का कोई कारण नहीं है। यह बिना कारण यों ही बनता-मिटता रहता है।

**अरूपा** :—२०।४८ शरीररहित देवता।

**निर्वाण** :—२०।४९ जीवनमुक्ति, त्रिकालमुक्ति, रूपासक्ति से सदा मुक्ति।

**जीवलोक** :—२२।४४ संसार जिसमें जीव आकर जन्म लेते हैं।

**शील** :—२३।१८, २६।३४ सदाचार ( हिंसा, चोरी, मिथ्याभाषण, व्यभिचार और मद्य-पान इन पाँचों का त्याग करना ) ये गृहस्थ एवं विरक्त, दोनों के लिये आवश्यक हैं। रात्रिभोजन, श्रृङ्गारचेष्टा, श्रृङ्गारवेश, शारीरिक सुख तथा धनार्जन, इन पाँचों का त्याग केवल विरक्तों के लिए है।

**मुक्तायुष्** :—२३।७५ जन्म का कारण तृष्णा आदि दोष क्षीण हो जाने से आयु नहीं रहती है।

**स्कन्ध** :—२४।२५ रूप ( शरीर ), वेदना ( चेतना ), संज्ञा ( पाँच ज्ञानेन्द्रियों के पाँच विषयों के संयोग होने पर विषयों की अनुभूति ), संस्कार ( सुख या दुःख के भोगने के बाद चित्त में जो वासना रह जाती है ), विज्ञान ( बुद्धि ) ये पाँच स्कन्ध हैं।

**संवेग** :—२४।२१ ग्लानि; वैराग्य।

**द्वन्द्व** :—२४।१५ सुख, दुःख, शीत, उष्ण, पाप-पुण्य इत्यादि संसार द्वन्द्व हैं।

**श्रेय** :—२४।२४ निर्वाण।

**सन्मार्ग** :—२६।३६ आध्यात्मिक मार्ग, सन्मार्ग।

**समाधि** :—२६।६७ समाधि के चार भेद हैं :—सवितर्क, निर्वितर्क, सविचार और निर्विचार। स्थूल विषयों की समाधि में पदार्थ के शब्द-अर्थ ज्ञान का भान जब तक रहता है तब तक सवितर्क समाधि कहलाती है, और जब शब्द तथा ज्ञान का भान लीन हो जाता है केवल अर्थ मात्र की प्रतीति होती है तब निर्वितर्क समाधि कहलाती है। इसी प्रकार जब सूक्ष्म विषयों की समाधि में शब्द, अर्थ, ज्ञान का भान रहता है तब सविचार समाधि कहलाती है और जब केवल अर्थ मात्र की प्रतीति रहती है तब निर्विचार समाधि कहलाती है।

**प्रज्ञाचक्षु** :—२६।७१ अध्यात्म दृष्टि, मल विक्षेप, आवरण इन तीन दोषों से रहित चित्त में दिव्य प्रकाश होना।

**ध्यान** :—२६।९४ वितर्कानुगत, विचारानुगत, आनन्दानुगत, अस्मितानुगत। प्रथम में स्थूल जगत की समष्टि का एकत्वेन ज्ञान रहता है। द्वितीय में इन्द्रियों और अन्तःकरणादि सूक्ष्म जगत् का समष्टि रूप से एकत्वेन ज्ञान रहता है। तृतीय में मूल प्रकृति की समावस्था का ज्ञान रहता है। चतुर्थ में अस्मिता 'अहं अस्मि' ( मैं हूँ ) ऐसा एकमात्र बोध शेष रहता है। ये एक के बाद एक सूक्ष्म एवं उत्कृष्ट हैं।

**योग** :—२७।२५ चित्त की वृत्तियाँ, प्रमाण, विपर्यय विकल्प, निद्रा और स्मृति हैं। इनका पूर्ण रूपेण निरोध ( लय होना ) योग कहलाता है।

**अष्ट प्रकृति** :—२७।२६ पंचमहाभूत, मन, बुद्धि, अहंकार ये अष्ट प्रकृति हैं।

**त्रिविध कर्म**—२७।२६ शुक्ल, कृष्ण और मिश्रित अर्थात् पुण्य, पाप और मिश्रित ( मिला हुआ ) तीन प्रकार के कर्म हैं।

**त्रिविध दृष्टि** :—२७।२७ युष्मत्, अस्मत् तथा तत् का तुम, हम और वह अर्थ होता है। इन तीनों को पृथक् जानना त्रिविध दृष्टि है।



# श्लोकानुक्रमणिका

# साहित्य की कतिपय पुस्तकें

१ **अनर्घराघव** । प्रकाश संस्कृत-हिन्दी टीका सहित ८-००
२ **अभिज्ञान शाकुन्तल** । किशोरकेलि संस्कृत-हिन्दी टीका सहित । संपूर्ण ६-००
३ **अभिज्ञानशाकुन्तल** ( चतुर्थ अङ्क ) संस्कृत-हिन्दी टीका सहित १-००
४ **अभिषेकनाटक** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २—५०
५ **अविमारक** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित ३-००
६ **उत्तररामचरित** । चन्द्रकला संस्कृत-हिन्दी टीका सहित ४-५०
७ **ऊरुभङ्ग** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २—५०
८ **कर्णभार** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित १-[illegible]
९ **कर्पूरमञ्जरी** । मकरन्द संस्कृत-हिन्दी टीका सहित २-[illegible]
१० **चारुदत्त** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २-[illegible]
११ **दूतघटोत्कच** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित १-[illegible]
१२ **दूतवाक्य** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित १-[illegible]
१३ **दूताङ्गद नाटक** । दूताङ्गद-चन्द्रिका संस्कृत-हिन्दी टीका सहित १-[illegible]
१४ **नागानन्दनाटक** । भावार्थ दीपिका संस्कृत-हिन्दी टीका सहित ३-[illegible]
१५ **नाट्यशास्त्र** । १-२ अध्याय । मयूख हिन्दी टीका सहित ०-६५
१६ **पञ्चरात्र** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २-२५
१७ **प्रतिज्ञायौगन्धरायण** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २-००
१८ **प्रतिमानाटक** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २-००
१९ **प्रबोधचन्द्रोदय** । प्रकाश संस्कृत-हिन्दी टीका सहित २-५०
२० **प्रसन्नराघव** । चन्द्रकला संस्कृत-हिन्दी टीका सहित ४-००
२१ **प्रियदर्शिका** । प्रकाश संस्कृत-हिन्दी टीका सहित २-००
२२ **बालचरित** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका सहित २-५०
२३ **मध्यमव्यायोग** । भास विरचित । प्रकाश संस्कृत-हिन्दी टीका स. टी. १-२५
२४ **महावीरचरित** । प्रकाश संस्कृत-हिन्दी टीका सहित ४-००
२५ **मालतीमाधव नाटक** । चन्द्रकला संस्कृत-हिन्दी टीका सहित ५-००
२६ **मालविकाग्निमित्र** । प्रकाश संस्कृत-हिन्दी टीका सहित ३-००
२७ **मुद्राराक्षस** । शशिकला संस्कृत-हिन्दी टीका सहित ३-२५
२८ **मृच्छकटिक** । प्रबोधिनी संस्कृत-हिन्दी टीका सहित ६-००
२९ **रत्नावली** । प्रकाश संस्कृत-हिन्दी टीका सहित ३-००
३० **विक्रमोर्वशीय** । प्रकाश संस्कृत-हिन्दी टीका सहित ३-००
३१ **वेणीसंहार नाटक** । प्रबोधिनी संस्कृत-हिन्दी टीका सहित ३-००

प्राप्तिस्थानम्—**चौखम्बा विद्याभवन** चौक, वाराणसी-१